न मथन्ति विषादभाजनं यतोऽप्यस्य सदैव शासनम्? ॥ १७ ॥ समशीर्षिकया प्रवर्धिसद्गुणानामनुरागवैभवैः । अपि तस्य न बाधते
क्वचित् पुरुषार्थत्रितयं परस्परम्? ॥ १८ ॥ इति वाचमुदीर्य भूपतौ स्थितिमासेदुषि सोऽब्रवीत् पुनः । कुशलं क्व नु तस्य पृच्छयते कुशलं
हन्त भुवोऽपि यः स्वयम् ॥ १९ ॥ अपि चाकुशलं प्रजासु तास्वथ राज्ये क्व नु तत्र संभवेत्? । ननु यत्र समास्ति शास्तिकृद् द्विपदाक्रान्तिग-
जस्तयामजः ॥ २० ॥ ननु तिष्ठतु वीरमण्डलीजयिनो दिग्विजये पुरोऽस्य कः । क्रमते तिमिरस्य विक्रमः कुत एव प्रतपत्यहर्पतौ? ॥ २१ ॥
ननु तस्य दिगन्तपार्थिवैः सममाश्रितमाप्यनेकशः । शिरसा नियतेव जन्मिभिर्भृशमिच्छा नियतेरिवोह्यते ॥२२॥ अविबाधितवृत्तिभिर्मिथः
पुरुषार्थत्रिभिरेष सेव्यते । भुवनैरिव हेमभूधरो दिवसः सान्ध्यविभागकैरिव ॥ २३ ॥ अपरैः परितो नृपैः परःशतसंख्यैः परिषेवितोऽप्ययम्।
अनुजानतिदूरगान् निजानविपश्यन्न कदापि मोदते ॥ २४ ॥ जगतीमवजित्य भारतीं भरतस्यात्मपुरीमुपेयुषः । नृपराजपदोत्सवं नृपाः
समुदो द्वादशवार्षिकं व्यधुः ॥ २५ ॥ अवगुण्य निजाननागतानतुजांस्तत्र महे महीयसि । अयमेकनृपः स्वपूरुषान् द्रुतमाह्वातुममूननोदयत्
॥ २६ ॥ अथ ते तु महाधियोऽन्तरा सविकल्पाः परिकल्प्य किञ्चन । वत तातपदद्वयान्तिके द्रुतमेत्य व्रतमेव भेजिरे ॥ २७ ॥ तदपारवियोग-
विज्वरश्वसनावर्तविवर्तगर्तत. । तदमुं तव देव ! सांप्रतं द्रुतमुद्धर्तुमुपेत्य सांप्रतम् ॥२८॥ ननु यद्यपि तत्र बन्धुताविवशस्त्वं न पुरा समागमः।
परिरक्षि तथापि तेऽन्यथा सहजादेव दुराशयो जनः ॥ २९ ॥ महतोऽप्यपथे यथा तथाप्युपरागादपचीयते महः। तपनो हि तुलाविशुद्धिमानपि
कन्यां गत इत्यतादृशः ॥ ३० ॥ तदहं नृप ! वच्मि ते हितं भरताधीश्वरलोचनाञ्चलैः । जनवादरजःप्रमार्जनं कुरु संप्रत्यपि नापराध्यसि
॥ ३१ ॥ स्वयमेव सदाऽनुजीविनामसमानार्थविसर्जनापरः । अभिमानधनप्रियस्तव प्रणतेर्नान्यदयं समीहते ॥ ३२ ॥ द्रविणाय न किन्तु
तेजसे किल धीराः कलयन्ति विक्रमम् । विनिहन्ति पतङ्गिपुङ्गवः फणिनः किं फणरत्नवाञ्छया? ॥ ३३ ॥ मम बन्धुरसाविति भ्रमादभ-

यस्य क्वचनापि मा स्म भूः । विजिगीषुमतेषु राजसु क्व नु संबन्धकथोपयुज्यते ? ॥ ३४ ॥ अथवा यदि वीरमानिताग्रहिलो वीरममुं न मन्यसे । ज्वलनेऽत्र हविर्भुजीव तल्लभसे त्वं शलभत्वमञ्जसा ॥ ३५ ॥ अथ जीवितराज्ययोः स्पृहा यदि काचित् तव विद्यते हृदि । भरतेश्वरशासनं तदा परभूपैरिव मूर्ध्नि धार्यताम् ॥ ३६ ॥ ननु यत्र विधीयतेऽन्वहं वरिवस्या त्रिदशासुरैरपि । तदिह प्रणतिं वितन्वतो नरमात्रस्य तवास्तु का त्रपा ? ॥ ३७ ॥

इति दूतगिरामनन्तरं स्वभुजौ बाहुबलिर्विलोकयन् । अधरद्युतिकैतवात् क्रुधारुणितां वाचमुवाच निश्चलः ॥ ३८ ॥ अयि दूत ! स मे समागमं यदि बन्धु प्रथमः समीहते । उपपन्नमिदं यदेष नः परिपूज्यः खलु तातसंनिभः ॥ ३९ ॥ इदमप्यतिसुन्दरं तव प्रभुराह्वास्त यदेष बान्धवान् । महतां न हि कल्पनस्तुषु स्मृतिवैकल्यमिहोपजायते ॥ ४० ॥ यत तातपदानुगामिषु स्वयमेतेषु तदीयसंपदः । भरतक्षितिरूपमामिषं यदवाप्यैष तिरोदधेऽनुजान् ॥ ४१ ॥ तदहं भवदीयप्रभुराह्वास्त ... यस्य गिलति स्म यास्यथ प्रतिबन्धोऽस्य स दूत ! नूतनः ॥ ४२ ॥ किल भूरिव मा स्म निर्जितो लघुभिर्ज्येष्ठ इति प्रजारवः । यदि तातमशिश्रियत्समी जितभूपतेरिह वृद्धस्य च वेद्मि नान्तरम् ॥ ४३ ॥ सकलामवजित्य मेदिनीमवनीशस्तव मां विरोधयन् । बहुगर्भितशास्यमात्मनः कपिकर्माऽद्य मजीकरोत्स्फाशी किमयं तव प्रभुः ? ॥ ४४ ॥ अयि दूत ! जनो विभाव्यते बत मय्येव तव प्रभोर्न किम् ? । लघुबान्धववैभवानि योऽग्रसदुद्भ्रान्तमिवाशु कुक्कुटः ॥४५॥ मम दूत ! युगादितीर्थकृद् वरिवस्यः प्रभुरेक एव नु । किमनेन स लप्स्यते यदि प्रणतिं ज्येष्ठतयाऽन्यथा तु न ॥ ४६ ॥ यदि चैष महोऽभिलाषते यदि मत्तोऽपि तवावनीपतिः । निशि दीपचिकीः फणीशितुः शिरसस्तन्मणिमात्तुमीहते ॥ ४७ ॥ विजिगीषुमतेषु राजसु क्व नु संबन्धकथोपयुज्यते । इति ते वचनं मृषा, यतो मयि सत्येष कुतो विजृम्भते ? ॥ ४८ ॥ ज्वलनेऽत्र हविर्भुजीव ये शलभत्वं कलयन्ति ते परे ।

मदमस्त तु शान्तये शरावलियर्षी सधनुर्घनाघनः ॥ ४९ ॥ भुवनाधिपसेवितक्रमः सविता यस्य युगादितीर्थकृत् । भुजविक्रमतस्तृणीकृतत्रिजगत्कोऽनुज एव मद्विधः ॥ ५० ॥ स सुरैरसुरैरनारतं वरिवस्य॰ कियदेतदभ्यधाः ? । इति दूत ! वदास्य दास्यकृत् ! यदसामान्यपराक्रमो पुरा ॥ ५१ ॥ युग्मम् ॥ तदमुष्य न सेवने त्रपा करुणा किन्तु ममाद्भुता हृदि । अवलोक्य यदेष मां पुरा खुरलीकेलिजितं ह्युपेष्यति ॥ ५२ ॥ उदजाजि पुरा ततो दिवः स पतन् कन्दुकवद् धृतो मया । तदमुष्य किमद्य विस्मृतं स्मयमानस्य चटुप्रचाटुभिः ? ॥ ५३ ॥ अथवा तव दूत ! भूपतिः स्मयते चक्ररत्नेन संप्रति । तदितोऽपि महत्वहंयुतां शकटं चक्रयुगं बिभर्ति यत् ॥ ५४ ॥ व्रज तत् त्वमहोऽतिरंहसा स समायातु तव स्वयं विभुः । करवाणि यथा स्वसायकैः स्मयगम्भीरगडोश्चिकित्सनाम् ॥ ५५ ॥ सभयः स सभागृहाद्यथार्थभिदूतस्त्वरितं निनिर्ययौ । भयगोसप्रमीरितनश्चिरं बलिभिर्बाहुबलेः पदातिभिः ॥ ५६ ॥ विविधायुधसीपणान् भटान् यमदूतप्रतिमान् विलोकयन् । नृपतेः सदनाद् निरीय तन्नगरोतोऽपि निरीयते स्म ॥ ५७ ॥ मनसासमरंहसा व्रजन् बहलीदेशमतीय रुक्कृतः । निजनायकदेशमाप्य स्वमयं मानितपान् पुनर्नयम् ॥ ५८ ॥ अथ बाहुबलेर्भयाकुलान् परतोऽप्युत्तरकोशलानयम् । रचयन् निजरंहसाऽऽगतो भरतायेति चरो व्यजिज्ञपत् ॥५९॥ यदि नाथ ! कथञ्चिदम्बुजैरपि धीयेत सहस्रदीधितिः । घनवह्निरपन्नुतेन्धनो यदि गृह्येत च मुष्टिना क्वचित् ॥ ६० ॥ न तथापि तवानुजस्पर्शी धृतविग्रनितयः स्वदोर्बलात् । विग्र [?] होतुमहो महस्विभिः परिशक्येत सुरासुरैरपि ॥ ६१ ॥ समरैकरतेरमुष्य दोर्ध्वनिकोलाहलकाहलारवैः । श्रुतिमार्गमुपैति नापरः सुभटः स्वर्गिनरासुरेष्वपि ॥ ६२ ॥ वरिवस्यति मामयं पुरेत्यथ कुर्या मनसापि मा भ्रमम् । भरतोऽप्यभिनामनकियातरजो पयसा निवार्यते ॥ ६३ ॥ इति मद्वचनं निशम्य चारतो भरतः क्षोणिपति क्रुधा ज्वलन् । अभियातिमभि प्रयाणकाहतढक्काभिरयोचदुत्तरम् ॥ ६४ ॥ रथचीत्कृतिवाजिहेषितैः करभक्रन्दितहस्तिबृंहितैः । पटुचेटरवैर्मिथस्तदा निनदाद्वैतमभूत् प्रयाणके ॥६५॥

करभैः क्व च वाजिभिः क्व च द्विरदैः क्वापि रथैरथ क्व च । तदनेहसि पादचारिणां निगमा दुर्गमतां प्रपेदिरे ॥ ६६ ॥ परितोऽपि
तदाऽभ्वदारितायनिधूलीमयधूमघोरयोः । भरतेशमहोहविर्भुजः किल कीलाः करिकेतवो बभुः ॥ ६७ ॥ क्षितिरेणुतमस्सु दुन्दुभिप्रतिनादैः
परितोऽपि यान्त्यपि । कटकानि वहुल्यतोऽत्यजन्नवियोगं भरताग्रसेनया ॥ ६८ ॥ अविलम्बकृतैः प्रयाणकैर्निजदेशं व्यतिलङ्घ्य कैश्चन । भरता-
धिपतिः समासदद् बहलीमण्डलमेदिनीमुखम् ॥ ६९ ॥

अथ बाहुबलिर्महाबलस्तरसाऽऽकर्ण्य तदा तदागमम् । जयडिण्डिमघोषडम्बरैरभियानाय बलान्यतत्वरत् ॥७०॥ अतिधीर्यतया चतु-
र्भुजश्चतुरम्भोधितटीषु विश्रुतः । प्रचलश्चतुरङ्गसेनया स चतस्रोऽपि दिशो विलोडयन् ॥ ७१ ॥ प्रविशन्तु भृशं कुहाप्यमी रिपवो बाहुबलेः
प्रणश्य मा । शुषिराणि रजोभिरुद्धतैस्तिरयामासुरितीव वाजिनः ॥ ७२ ॥ करिकेतुसमन्वितं रजःपटलं व्योमतले तदा बभौ । फणिलोक-
युता मही महाबलसंमर्दमपादिवोद्गता ॥ ७३ ॥ क्षिपतां वदनानि तद्धुनयनानीह विहाय सर्वतः । तृणमम्बु च नान्यतो नरैर्ददृशे बाहुबलेः
प्रयायके ॥ ७४ ॥ अथ चक्रिचमूपकण्ठभूवलये बाहुबलेः पताकिनी । समुपेत्य निवासमग्रहीद् विगृहीतेरिव मूलमात्रिका ॥ ७५ ॥ अनयोर्जगदादि-
वीरयोः समरः प्रातरहो भविष्यति । इति वक्तुमिवागतस्तदा चरमाशास्याहसारथिर्ययौ ॥ ७६ ॥ व्रजतोऽस्तमहर्पतेर्महःपटलैः पाटलि-
तानि तान्यथ । कटकाम्बुमयान्यपि क्रुधा ज्वलितानीव मिथो विरेजिरे ॥ ७७ ॥ परिसंवृतवत्यहो महःपटमास्फोट्य दिवातनं रवौ । तमसो-
च्छलितं पुराचलद्बलमालारजसेव तद्युता ॥ ७८ ॥ उडुभिः सममिन्दुरुद्ययौ परितो द्रष्टुमिवाथ कौतुकात् । असिजागरणानि दोर्भृतामु-
भयोरार्पभिसैन्ययोस्तयोः ॥ ७९ ॥ असिजागरवाद्यनिःस्वनश्रुतिवित्रस्तमिवैणमीक्षितुम् । निरगाद् मृगलाञ्छनो निशाविगमेऽस्ताचल-
चुलिकावनम् ॥ ८० ॥ सफलां रजनीं स्थितः क्वचिद् निजमन्त्राणि निमन्त्रयन्निव । रणवीक्षणहेतवे तयोरुदयाद्रावधिरूढवान् रविः ॥ ८१ ॥
उभयोरपि योद्धुकामयोरयास्ताद्विगतौ क्षपाजिजौ । क्षणमार्पभिसैन्ययोस्तयोः करदण्डाद् दधतुस्तदाऽन्तरा ॥ ८२ ॥

अथ भक्तिभरेण तावुभावृषभस्वामिनमार्पभी नृपौ । परिपूज्य रणोद्यतावचीवदतां दुन्दुभिमात्मसैन्ययो ॥ ८३ ॥ रणदुन्दुभिनादसंज्ञया समनह्यन्त तयोर्ध्वजान्यथ । अभिलंघ्य युगान्तमत्तयोरिव पाथांसि मिथः समुद्रयोः ॥ ८४ ॥ सुभटैः सुभटा रथै रथास्तुरगैश्चापि तुरङ्गमास्तदा । करिभिः करिणो रणोत्सवं किल तुल्यप्रतिपन्थिनो व्यधुः ॥ ८५ ॥ प्रथमं रणतूर्यगर्जितैस्तदनु क्षोणिरजोभिरुद्धतैः । शरधोरणिभिस्ततोऽपि च प्रतिलेशं पिदधे नभस्तदा ॥ ८६ ॥ क्षिपतां निधनाय धन्विभिः प्रहिताः प्रोतधनोद्धुरीपकाः । निजवध्यजनं रजस्तमस्यपि पश्यन्त इवेपवोऽभ्रमन् ॥ ८७ ॥ सुभटक्षतजप्रवन्तिका विलसन्त्यो वसुधातले बभुः । रणरेणुतमोऽन्धलेः शरैरवलूना इव सूर्यरश्मयः ॥ ८८ ॥ प्रहतेभरदाननैस्त्रुटिं समवाप्योच्छ्रलिता भटासयः । रणरेणुपयोदमण्डले वपुरुद्यद्रतडिल्लतायितम् ॥ ८९ ॥ द्विपदाहितकुन्तपङ्क्तिभिः परिणः शल्यकशूलिता बभुः । उपरूढकुमारिकौषधीसमुदायप्रचिता इवाद्रयः ॥ ९० ॥ हतयुग्यहयाः कथंचनाप्यतिदूरे रथिनः पुरः स्थितान् । तरलासनरीतरद्रथाः समुपेत्यात्मरिपून् न्यपातयन् ॥ ९१ ॥ करभद्रयसासृगापगातरदुत्तुङ्गतरङ्गशालिनाम् । गजमौक्तिकैर्निपादिभिः समकृताऽजनि सादिनामपि ॥ ९२ ॥ विकराजकरांहिपङ्कजे युधि कीलालचराचरे तदा । भटमस्तकनालिकेरके यमदूता निभृतोत्सवं व्यधुः ॥ ९३ ॥ अथ बाहुबलिप्रभूत्तरा भरताधीशपताकिनीभटान् । तरणेः किरणाग्रपल्लवास्तिमिराणीव तिरोदधुः क्षणात् ॥ ९४ ॥ अथ भग्ननिजाश्रयः स्वयमाटोपमवाप कोपजम् । प्रचचाल युधे चलच्चमूभरनिष्पीडितपन्नगेश्वरः ॥ ९५ ॥ अवधार्य निजार्यमरमनो विलसत्सङ्गरकर्मसङ्गरम् । समकालमहर्षहर्षयोरभवद् बाहुबलिः पदं तदा ॥ ९६ ॥ अथ सोऽपि महाभुजः स्वयं रणदीक्षामधिगम्य रंहसा । उदयाद्रिमिवार्यमा क्षमापतिरारोहदिभेन्द्रमुच्चकैः ॥ ९७ ॥

स्वयमेव महाभुजाविमौ समयशातिनिरीक्ष्य सोद्यमौ । धुसदोऽपि चकम्पिरे तदा प्रभभं हन्त ! युगान्तशङ्कया ॥ ९८ ॥ भरतं

तव साधयतोऽखिलाभिजां
समुपेत्य रंहसा वितरन्तोऽस्य जयाशिष सुराः । इदमूचुरथैचितीचितं रचितप्राञ्जलय. प्रशान्तये ॥ ९९ ॥ तव साधयतोऽखिलाभिजां
यदि कश्चिद् नहि समुखोऽभवत् । भुजखर्जुभिदे स्वबन्धुना रणकाम· किमु लज्जसे न तत् ? ॥ १०० ॥ अथ भूपतिराह भारत-
त्रिदशान् युक्तमिद भवद्वचः । अधुना रणकारण पुनर्वत जानीथ न यूयमावयोः ॥ १०१ ॥ भुजखर्जुभिदा निबन्धनं न युधः किन्तु
रथाङ्गमङ्ग ! मे । न हि शस्त्रगृहे विशत्यदः शिशुवद्यन्त्रशाठो यथा मठे ॥ १०२ ॥ अचिरात् तदनुप्रविश्य मामिदमप्यस्त्रगृहं प्रवेश्य
च । सकुजस्य किलास्य काश्यपीवलयस्यास्तु ममानुजः पति ॥ १०३ ॥ वत बोधयताऽमुना मनाग् वचसा बाहुबलिं महावजम् ।
यदि युद्धनिषेधहेतवे भवतामस्ति मनस्युपक्रमः ॥ १०४ ॥ अथ ते पुनरूचुरेप चेद् नहि बुध्येत तथापि न त्वया । रणकर्म विधे-
यमायुधैः शपथाः श्रीनृपभप्रभोरिह ॥ १०५ ॥ ननु दृष्टिवच.सुदृष्टिदोर्यिलसन्मुष्टिसुयष्टियुद्धतः । युवयोरमरैर्बलावलं परिभाव्यं, निशितैः
किमायुधैः ? ॥ १०६ ॥ इति भूमिभृता प्रतिश्रुते वचने बाहुबलिं ययुः सुराः । समुदीर्य जयाशिषं पुरस्तमभाषन्त गिरा सुधाकिरा
॥ १०७ ॥ नयनिष्ठ ! तवैप बान्धवः प्रथमः सत्क्रियते न किं त्वया ? । भरतं प्रति देव ! संप्रति प्रधनारम्भमपोढुमर्हसि ॥ १०८ ॥
ऋषभस्य विभोर्न संमता नियतं तावदमी कुधादयः । तदमीषु तदङ्गजस्य ते परिपोषः किमयं यतोचितः ? ॥ १०९ ॥ नतमात्रतया तवैप
यः परितापं भजते किलाग्रज । प्रणिपत्य तमर्हमानते कुरुपे किं न महीमिहात्मसात् ? ॥ ११० ॥ अथ बाहुबलिर्गभीरया गिरया प्राह स
तानभी स्यात् । कथमित्थमहो ! भवादृशैरपरिज्ञातकथैरिवोच्यते ? ॥ १११ ॥ बत बन्धुतया ममान्तिकाद् यदि सत्कारमयं समीहते । उप-
पन्नमिदं तदेव यद् मम तातप्रतिमोऽयमग्रजः ॥ ११२ ॥ जितकाशितया परं महस्वितया मामवकृत्य नामयेत् । न तदेतदहं सहे, सतां धन-
मेकं भुवि मान एव यत् ॥ ११३ ॥ न विनष्टममुष्य किंचन स्फुटमद्यापि महौजसोऽथवा । अपसर्पतु सङ्गरादसावहमप्येष निवृत्त एव तत्

रेक०
॥२०॥

॥ ११४ ॥ निजशासनमन्यमेदिनीपतिसामान्यचिकीरसौ मयि । समुपेत्य गिराविवास्फलन् रदभङ्गं करटीव लप्स्यते ॥ ११५ ॥ न भवेऽत्र
भवे परत्र च प्रभुरन्यो मम तातमन्तरा । अभिगम्य रुचामधीश्वरं न विधीयेत वुधैः प्रदीपक. ॥ ११६ ॥ अथ बाहुबलिं जगु. सुरा जगती-
मण्डलमौलिमण्डन ! । विशदापि सदापि शेमुषी नहि कार्ये भवतीह समुखी ॥ ११७ ॥ भरतेश्वरचक्रमेकतो भवदीयप्रणतेः समीहया । न
गुहामिव केशरी विशत्यकृतार्थं भुवमायुधालयम् ॥ ११८ ॥ विनये वयमन्यतस्तवातिशयं वीक्ष्य न वक्तुमीश्महे । पुनरेकमिहार्थयामहे नहि
योद्धव्यमतुच्छयायुधैः ॥ ११९ ॥ नयनादिरणैर्बलाबलं प्रसमीक्ष्याशु जयव्यवस्थिति । युवयोः प्रविधास्यते, ध्रुवं वयमेवात्र भवाम साक्षिणः
॥ १२० ॥ प्रतिपन्नवतीदमत्र ते त्रिदशाः श्रीनृपमाज्ञया भटान् । विनिषिध्य युध शुचिं व्यधुर्भुवमङ्गाङ्गिरणार्थमेतयोः ॥ १२१ ॥ उभयोरपि
सैन्ययोर्भटा विनिषिद्धा प्रभुपूरुषैरपि । समरादवलम्भरोपिता इव मुग्धा इव लज्जना इव ॥ १२२॥ अथ मङ्क्षु मिथो जयेषिणौ समयपायो-
धितसीशमीयतु । नमसीव विभाविभावरीरमणौ तौ रणमार्पभी नृपौ ॥१२३॥ स्फुटदृष्टिविवादसादरौ चिरमेतौ समतिष्ठतां ( ? ) स्थिरौ ।
घटिताविव विस्मिताविवाहितयोगाविव विस्मिताविव ॥१२४॥ अतिकौतुकतोऽनिमेषिभिस्तदनुध्यानवशादिवाथ तौ । अमरैर्नभसि स्थितैर्भुवि
स्थितिविद्भिश्च नरैर्निरीक्षितौ ॥१२५॥ अथ बाहुबले रवेरिव प्रसरद्दीधितिदर्शनार्दितै । भरतः स्वदृशौ निमीलयन् विजयायाऽऽदित तोयम-
भूमिः ॥१२६॥ अवितर्कमहो जितं जितं बलिना बाहुबलिक्षितीन्दुना । नमसीति दिवौकसो व्यधु स्तुतिघोष जयसाक्षिणस्तदा ॥१२७॥
अथ दृष्टिजितेन चक्रिणा सह तेनासहनीयविक्रमः । सुरसार्थसमक्षमाश्रित क्षितिपस्ताक्षशिलः स्वमाहवम् ॥१२८॥ भरतस्य मृगेन्द्रगर्जित-
ध्वनितेन प्रसभं विसर्पता । फणिनां च नृणां च नाकिनामपि बाधिर्यमजायत क्षणम् ॥१२९॥ अथ तक्षशिलापतिर्मृगाधिपतिध्वानमसूत्रयत्
तथा । चलितं धरया यथाऽचलैः पतितं दिक्करिभिश्च मूर्च्छितम् ॥१३०॥ प्रलयाम्बुदशब्दबन्धुना परितः क्षुब्धपयोधिनाऽमुना । भरतः

॥२०॥

पुनरेव निर्जितो यवसा वाहुवलेर्यंलीयसा ॥ १३१ ॥ अथ मुष्टिरणाय सोद्यमावपसृत्याशु नराधिपाविमौ । भयदौ भुवनेऽप्यधावतां करमु-
त्पाद्य यनद्विपाविव ॥ १३२ ॥ अनयोः पदपीडितस्थिराभरयेयेश फणः सहस्रधा । फणिनः स्फुटित', फरेर्मुख विनत, सङ्कुचितश्च कच्छपः
॥ १३३ ॥ भरतस्य करप्रहारत. पुरतस्तत्तशिलानरेश्वरः । क्षणमेकममूर्च्छदन्तरा जयलाभौपयिक मृशन्निव ॥ १३४ ॥ अथ तामवधूय तत्क-
राहतिमूर्च्छां, भरत स मुष्टिना । निजघान तथाऽपतद् यथा सममेषोऽप भटाश्रुविन्दुभिः ॥१३५॥ अथ चन्दनवारिसेकतः प्रगुणं वाहुवलि-
र्व्यधात्तमुम् । इदि मत्सरपूरितेऽप्यहो ! न हि नाभि. प्रतिबन्धचौरिका ॥ १३६ ॥ अथ संभृतदण्डसङ्गराथितया निर्मितसङ्गराविमौ ।
इढवण्डकरावधावतां जगतां त्रासकरौ यमाविव ॥ १३७ ॥ बहलीपतिराशु ताडित शिरसि श्रीभरतेन दण्डतः । घनघातितवज्रवत् तवा-
ऽभुडवाजानु वसुन्धरोपरि ॥१३८॥ अथ पङ्किलत्त किज क्षमातजतः स्वावयन्पुष्य च क्रमौ । भरत इढदण्डघाततस्तरसाऽऽकण्ठमसावमज्जयत्
॥ १३९ ॥ नृपरत्नमथैव रोहणादिव 'हा दैव !' गिराङ्कितानैः । प्रविदार्य महीमकृष्यताऽऽयतकुद्दालकरै स किंकरैः ॥ १४० ॥ किमु नाहु-
मिजातजे त्वयं बत चक्रीति विषादमीयुषः । भरतस्य करे समाययावथ चक्र ज्वलदर्कबिम्बवत् ॥ १४१ ॥ अनुजस्य वधाय तत्क्षयात्त्रिदशां-
स्त्रासयदम्बरस्थितान् । अविशङ्कमसौ मुमोच तत् प्रजयाम्भोद इवाशनिं नदन् ॥ १४२ ॥ तदनेकभटासिपट्टिसप्रकरप्रासनिरुद्धमप्यथ ।
बहलीपतिमापतद् भृशं भरतस्येव जयाशयोऽङ्कसन् ॥१४३॥ स्वकुले प्रभवेद् न चक्रमित्यभितो बाहुबलिं परीय तत् । भरतेशकरे पुनर्ययौ
निशि पक्षीव कुलाय पादपे ॥ १४४ ॥ अयमेष करोमि भस्मसात् सहसाद्य सचक्रमप्यमुम् । अथ बाहुबलिः क्रुधा कर समुदस्याव्रजदग्रजं
प्रति ॥ १४५ ॥ गत एव निकेतनान्तिक हहहाऽसौ प्रतिचक्रवर्त्यसौ । इति नागमनुष्यनाकिनां तुमुलो व्योमतल व्यगाहत ॥ १४६ ॥ अत्रा-
न्तरे *विजसितोरुविवेकसूरः शाम्यत्तमा विमृशति स्म स वीरमानी* । क्रोधादिभिर्विजितमेनमिहाग्रजं मे जेतुं इहा ! विफल एव मनोऽभि

तारः ॥ १४७ ॥ एतान् विश्वत्रयविजयिनो यद्यहं जेतुमीशे तत्तातस्य त्रिभुवनगुरोरस्मि तस्याङ्गजन्मा । इत्युन्मीलन्मतिरयमपाकर्तुमन्तर्विपन्त तूलानीवोद्खनदखिलान् पाणिना तेन केशान् ॥ १४८ ॥ धन्याः केवलिनः कथं नु जघनः स्वे बन्धवस्ते मया, तत्तेषां समतामवाप्य नियतं यास्यामि तावान्तिकम् । इत्यालोच्य समाधिसाधितशमानन्दः सुनन्दाङ्गजः संध्यानं प्रतिपालयन्निव समागच्छत् तदोर्ध्वे स्थितः ॥ १४९ ॥ मानन्दं नादयन्तस्तदनु तनुमतां ध्वस्तकल्पान्तशङ्कैः शङ्कैर्घनासक्तचद्ध्वनिभिरभिनभो दुन्दुभीरिन्दुभीमाः । देवाः के वा न खेलालुलदलिकलितस्फीतसंगीतबन्धां गन्धाम्भःपुष्पवृष्टिं विदधुरिह सुनन्दासुतस्योपरिष्टात् ? ॥ १५० ॥

॥ इति भरतभूषणनामनि महाकाव्ये तृतीयः सर्गः ॥

तं तथाविधमालोक्य बान्धवं वाष्पमुद्गिरन् । विषण्णकर्मणा स्वेन चक्री चेतस्यचिन्तयत् ॥ १ ॥ धिग् धिग् मे चक्रवर्तित्वं बन्धु-
भिर्विरहो यतः । फलवत्त्वं मधूकद्रोः पत्रद्रोहि स्तवीति कः ? ॥ २ ॥ धुनबन्धुरहं निन्द्यः कालकुक्कुटयोरपि । यौ ग्रासमुपभुञ्जाते सममेव
स्वबन्धुभिः ॥ ३ ॥ स्वपक्षमधिवंस्तेजस्व्यपि राजति नान्यथा । सूर्याचन्द्रमसोश्चन्द्र एव राजा ग्रहेषु यत् ॥ ४ ॥ ध्यात्वेति चिरमध्यात्म-
बन्धुरं बन्धुमात्मनः । निपत्य पदयोश्चक्री निजगाद सगद्गदम् ॥ ५ ॥ भ्रातस्तातसुतोऽसि त्वं नैवाहमधमाधमः । वध्येऽपि मयि यः कुर्वन्
कृपां शममशिश्रिय. ॥ ६ ॥ हतकोऽहं पुरा त्यक्तः समग्रैरपि बन्धुभिः । त्यजंस्त्वमपि मामेकाकिनं संप्रति मा कृथाः ॥ ७ ॥ तातराज्यमिदं
ताततुल्यस्त्वं पातुमर्हसि । चक्रवर्त्यपि वर्तिष्ये तथाहं शासलेशवत् ॥ ८ ॥ तात ! तात ! स्वकर्मानुशयाशनिहविर्भुजा । मह्यं प्रदह्यमानाय
देहि वागमृतच्छटाम् ॥ ९ ॥ भरतो विलपन्नेवममात्यैरित्यबोध्यत । नाथ ! बाहुबलिर्नाऽथ वक्तासौ निश्चितव्रतः ॥ १० ॥ इति तद्वचनैश्चक्री
जानन् बान्धवनिश्चयम् । उन्मुखः साश्रुदृक् पादन्यस्तहस्तोऽवदत् पुनः ॥ ११ ॥ न चेद् वास्यसि तद् मा दा वाचं वाचंयमोत्तम ! । प्रसादद्दृष्टि-
दानेऽपि किं कापि स्याद् व्रतक्षितिः ? ॥ १२ ॥ अथ दृष्ट्वा मुनीन्द्रेण सुधावृष्ट्येव किञ्चन । भूभृत् संभावितः सोऽयं जातरोमाङ्कुरोऽभवत्
॥ १३ ॥ ततो बाहुबलेः पादौ प्रक्षाल्याश्रुजलप्लवैः । धम्मिल्लेन च संमार्ज्य निर्ययौ भरतेश्वरः ॥ १४ ॥ अथ सोमयशा बाहुबलेः सूनुरनूल-
दृक् । स्वयं तक्षशिलाराज्ये भरतेन न्यविश्यत ॥ १५ ॥ ततः सकटकः कुर्वञ्जलस्थलविपर्ययम् । ययावयोध्यामध्यास्त चक्रमप्यायुधालयम्
॥ १६ ॥ चतु षष्टिः सहस्राणि तस्यासन् शासितुः प्रियाः । द्वात्रिंशच्च सहस्रा भूभुजो मुकुटवर्धनाः ॥ १७ ॥ प्रत्येकं च रथाश्वेभं लक्षाश्च-
तुरशीतयः । षट्पञ्चाशत् कोटयश्चाभूवंस्तस्य पदातयः ॥ १८ ॥ निधयो नव रत्नानि चतुर्दश च जज्ञिरे । तस्य विश्वजयस्फातिसुभगं-
करणौजसः ॥ १९ ॥ अनन्यशासनामब्धिमेखलामखिलामपि । स शशास महीमेतामहीनभुजविक्रमः ॥ २० ॥

... । ...शीलप्रतिरूपमपाकर्तुमन्त-

इतश्च भगवान् बाहुबलिः कलितनिश्चयः । तस्थौ स्तम्भमिवारोप्य जेतुमान्तरवैरिणः ॥ २१ ॥ जयतस्तस्य षड्वर्गं दृढासनपरिग्र-
हाम् । ऋतवस्तेनिरे पार्ष्णिघातं षडपि दुःसहम् ॥ २२ ॥ हिमाद्रिवाणयन्त्रोत्थैराशुगैः स तथाऽऽशुगैः । हेमन्तः काययष्टिस्थान्युल्ललास दि-
शानिशम् ॥ २३ ॥ वायव्याश्रैरपातुर्यन् साजेपुन्दलमालिकाम् । शिशिरः प्रासरत् सूरमण्डलं रजसा गिलन् ॥ २४ ॥ प्रावर्तत वसन्तोऽथ
निःसरत्पत्त्रयच्छतात् । प्राहयंश्च संन्यस्तशस्त्रानप्यत्रमेहिपान् ॥ २५ ॥ ग्रीष्मो भीष्मोल्लसल्लूकापावकास्त्रविसर्जनैः । चूर्णयन् भूभृतस्तू-
र्णमथ प्रादुरभूद् मुनि ॥ २६ ॥ स रोहितधनुर्मुञ्चन् धारानाराचघोरणिम् । तर्जयन् विद्युदङ्गुल्या प्रावृट्कालस्ततोऽभवत् ॥ २७ ॥ यत्राप
ष्नभूयममोयमपि मोयताम् । शरासारः कथंकारमत्र मे प्रभवत्वयम् ? ॥ २८ ॥ प्रावृडेतद् विमृश्येव तं मुनिं विप्लावनैः । नागपाशैरिवा-
श्नात् क्षितियन्धाद् मिनि रुतैः ॥ २९ ॥ युग्मम् ॥ वाहिनीर्ग्लपयन् वाणासनन्यस्तशिलीमुखः । राजहंसपरीतोऽथ शरत्काल समाययौ
॥ ३० ॥ ऋतवोऽभ्येत्य सर्वेऽपि क्रमेण कृतनिग्रमाः । तत्र न प्राभवन् मत्तद्विपा इव नगोत्तमे ॥ ३१ ॥ वर्षानशनयोगेन मत्वा तमथ निर्म-
लम् । तपस्यदेतये ब्राह्मीसुन्दर्यौ प्रेषयत् प्रभुः ॥ ३२ ॥ युवाभ्यामिति वाच्योऽयं 'मत्तेभाद् भ्रातरुत्तर' । इत्यादाय प्रभोः शिक्षां प्रतिन्यौ ते
निरीयताम् ॥ ३३ ॥ स्थानं तत्र्य ते याते न तं मुनिमपश्यताम् । दृष्टो गुल्मस्तु वल्लीनां सोच्छ्वास. पुरुषाकृतिः ॥ ३४ ॥ तत्र संभाव्य तं
ताभ्यां करजाञ्शिमन्त्रयत् । उक्तां निशम्य तां वाचं मुनिः सोऽपीत्यचिन्तयत् ॥ ३५ ॥ शब्दोऽयं नियतं ब्राह्मीसुन्दर्योः श्रुतिसुन्दरः । भा-
रते गानृतं चैते न चारूढोऽस्मि हस्तिनम् ॥ ३६ ॥ विकल्पात् कल्पयन्नेवं दध्यौ वन्दे लघून् न यत् । मानोऽयमेव मे हस्ती तमारूढोऽस्मि
तुर्यिपः ॥ ३७ ॥ सत्यं मत्वेति तातेन मय्यतीव दयालुना । प्रेषिते प्रतिबोधाय महासत्याविमे उभे ॥ ३८ ॥ लघूनपि गुणज्येष्ठान् वन्धून्
र्ष्यजयन्भुरान् । सिद्धायांनिव तान् मूर्ध्नि करिष्ये सिद्धिहेतवे ॥ ३९ ॥ इत्यमानोऽयजद् यावज्ज्ञानेनापि स तत्क्षणात् । समानशीलयोः

सत्यमित्यमानेन सस्वजे ॥ ४० ॥ दिवि दुन्दुभयो नेदुरासेदुः पुष्पवृष्टयः । प्रापुस्तं च तदा भक्तिभासुरा वन्दितुं सुराः ॥ ४१ ॥ अथैष
सुरसार्थेन स्तूयमानो मुनीश्वरः । जगाम देशनाधाम युगादिजगदीशितुः ॥ ४२ ॥ प्रभुं प्रदक्षिणीकृत्य गत्वा केवलिपर्षदि । केवली निषसा-
दोडुमपङ्क्ते सितरश्मिवत् ॥ ४३ ॥ अन्यदा समवासार्षीदष्टापदगिरौ विभुः । समं समीयतुश्चात्र भरतेश्वरवासवौ ॥ ४४ ॥ देशनान्ते तत-
श्चक्री बन्धूनालोक्य चत्यजः । तेषां भोगविभागाय जिनराजं व्यजिज्ञपत् ॥ ४५ ॥ अथादिदेश भगवान् भूपते ! बन्धवस्तव । भोगान् रोगा-
निरापास्य किं भूयोऽभिलषन्त्यमी ? ॥ ४६ ॥ आनाय्य भोज्यमथ भूनाथो नाथं व्यजिज्ञपत् । भोजनायादिश स्वामिन् ! तर्हि मे बान्धवा-
नमून् ॥ ४७ ॥ अथावादीज्जिनो नेदं मकारैः कल्पते त्रिभिः । कारिताभ्याहृतत्वाभ्यां राजपिण्डत्वतोऽपि च ॥ ४८ ॥ स्वामिनेति निषिद्धे-
ऽस्मिन् सर्वथा तत्खिदाभिदे । अवग्रहभिदाः पृष्टः शक्रेणाख्यज्जगद्गुरुः ॥ ४९ ॥ शक्रस्य चक्रिणो राज्ञः स्थानेशस्य गुरोरपि । पञ्चधाऽव-
ग्रहो, भावात् पञ्चानामपि पुण्यकृत् ॥ ५० ॥ अथ शक्रः प्रणम्याह प्रभो ! क्षेत्रेऽत्र भारते । मया वासाय साधूनां प्रदत्तोऽयमवग्रहः ॥ ५१ ॥
आकर्ण्य भरतोऽप्येति प्रीतो नत्वा जगद्गुरुम् । अनुजज्ञे निवासाय साधूनां भारतीं भुवम् ॥ ५२ ॥ अथापृच्छद् शुभतीरं महाभर्ता ससं-
भ्रमः । देयं कस्याक्षमानीतमिदमेवं निवेद्यताम् ॥ ५३ ॥ गुणाधिकेषु कर्तव्या पूजेत्युक्ते बिडौजसा । साधून् विना गुणी कोऽस्ति भरतोऽप्येति
विचिन्तयन् ॥ ५४ ॥ ज्ञातं सन्तितमां मत्तः श्रावकाः सद्गुणाधिकाः । तेषां पूजा विधेयेति भरतो निश्चयं व्यधात् ॥ ५५ ॥ युग्मम् ॥ अथ
गत्वा जिनं शक्रो धामयोध्यामिलापतिः । भगवानपि चान्यत्र जगामाष्टापदाचलात् ॥ ५६ ॥ भरतोऽपि रतो धर्मे श्राद्धानाहूय भूयसः । इदं
जगाद भोक्तव्यं भवद्भिर्मम मन्दिरे ॥ ५७ ॥ क्रियासु कृषिमुख्यासु कार्यं चेतोऽपि न क्वचित् । भवद्भिः केवलं भाव्यं धर्मकर्मसु कर्मठैः
॥ ५८ ॥ पाठ्यमेतच्च निश्राव्यं भोजनान्ते मदग्रतः । जितो भवान् भयं चास्ति तस्माद् मा हन मा हन ॥ ५९ ॥ मत्वेदमथ ते श्राद्धा भवने

तस्य भुञ्जते । पठन्ति च वचस्तत् तद्व्यामोहगरगारुडम् ॥ ६० ॥ सोऽपि श्रुत्वा प्रमादीदं व्यमृत्तद् विजितोऽस्मि कैः । कषायैर्भयमेतेभ्य-
स्तद् घात्याः प्राणिनो न मे ॥ ६१ ॥ प्रमादजाड्ययुक्तस्य नित्यं भरतभूपतेः । तद्वाक्यैरभवद् धर्मध्यानानलहसन्तिका ॥ ६२ ॥ श्राद्धाश्राद्ध-
विवेकित्वे तन्नियोगिनिवेदिते । चक्री चक्रे परीक्षां तद्रत्नवतगुणव्रतैः ॥ ६३ ॥ श्रावकाणां तदा चक्रे निर्व्यूढानां परीक्षणे । रेखात्रयं
स काकिण्या ज्ञानादित्रयसूचकम् ॥ ६४ ॥ तत्स्वाध्यायकृते वेदान् यान् निश्चिक्ये स चक्रभृत् । तीर्थच्छेदे स्वनार्यत्वं मिथ्यात्वं चा-
भजन्त ते ॥ ६५ ॥

इतश्च तीर्थभृत्सभसेनादिमुनिसेवितः । स्वपादस्पर्शनाद्यापि प्रकाश्य विमलाचलम् ॥ ६६ ॥ स्वामी मत्वा स्वनिर्वाणसमयं समया-
गतम् । प्रयक्षीनमिरोष्णांशुपरुढोऽष्टापदाचलम् ॥ ६७ ॥ प्रत्यपद्यत साधूनां सहस्रैर्दशभिः सह । चतुर्दशतपोयोगात् पादपोपगमासनम्
॥ ६८ ॥ निर्गेपकम् ॥ तथावस्थितमद्रीशपालो व्यालोक्य तं प्रभुम् । गत्वा विज्ञपयामास भूमिवासवमार्षभिम् ॥ ६९ ॥ श्रुत्वा चतुर्दशाहार-
परिहारं जगद्गुरोः । न चतुर्दशभिर्भेजे रत्नैरपि नृपो मुदम् ॥ ७० ॥ ततश्चरणचारेण चचाल भरतेश्वरः । परितो हरितो रुन्धन्नष्टापदं
प्रति ॥ ७१ ॥ वेगादयमथारूढस्तं तथावस्थितं प्रभुम् । अपश्यत् प्रसभोन्मीलद्बाष्पाधलिविलोचनः ॥ ७२ ॥ स प्रणम्याभवद् याव-
दुपास्तिमस्तुतानयः । अपश्यत् तावदायातान् सर्वान् गीर्वाणनायकान् ॥ ७३ ॥ भक्तिशोकभरस्तोमभङ्गुरैः कृतकन्धरैः । तैः समं
स्वामिनामीतमुपासामासिवानसौ ॥ ७४ ॥ माघकृष्णत्रयोदश्यां पूर्वाह्णेऽभीचिगे विधौ । विध्वस्तकल्मषो मोक्षं स्वास्येकसमयाद्यात् ॥७५॥
क्षपकश्रेणिमारुह्य बाहुबल्यादयोऽपि च । मुक्तिं दश सहस्राणि मुनयः प्रभुवद् ययुः ॥ ७६ ॥ प्रभोर्मोक्षक्षणे तत्र नारकेष्वपि सौख्यदे ।
अज्ञातदुःखितश्चक्री मूर्छितः क्ष्मातलेऽपतत् ॥ ७७ ॥ शोकग्रन्थिविभेदाय रुदितं शिक्षयन् हरिः । तस्य कण्ठमथाजभ्य पूत्कारं तारमात-

नोत् ॥ ७८ ॥ लब्धसंज्ञोऽथ राजापि यदन्तुच्चै स्वरं चिरम् । विह्वलं शोकपूरेण विलापानकरोदिति ॥ ७९ ॥ नाथ ! त्यक्तः कुतो दोषाद् नाथोऽयं जनस्त्वया । युष्मद् विना कथं भावी भवारण्येऽशरण्यकः ? ॥ ८० ॥ वियोगं सह्यते भानोः पुनरुद्गमनाशया । अनावृत्तिपदस्थस्य भवतस्तु सुदुःसहः ॥ ८१ ॥ मृजतोऽपि न यैर्दृष्टस्तेऽस्मत्तोऽतिवर प्रभो ! । अदृष्टेऽर्थे न तद् दुःखं दृष्टनष्टे हि यद् भवेत् ॥ ८२ ॥ बान्धवो ऽप्यनुगन्तारस्त्वाममी मम सर्वथा । एक एवाहमत्रास्मि त्वया पङ्क्तिबहिष्कृतः ॥ ८३ ॥ भूत्वापि तत्सुतश्च किमिति शोकवशंवदः । अपि मुक्तिपदप्राप्तं किं शोचयसि तं प्रभुम् ? ॥ ८४ ॥ नृपः प्रलापान् कुर्वाणः स्वयं गीर्वाणभूभुजा । इत्थं प्रबोधितः स्तोकशोकशङ्कुर्बभूव सः ॥ ८५ ॥ युग्मम् ॥

अथादिनाथतज्ञातीयसिद्धाङ्गसत्कृतिम् । यथाविधि विधायेन्द्रास्तत्र स्तूपत्रयं व्यधुः ॥ ८६ ॥ ततश्चाष्टाह्निकां नन्दीश्वरे कृत्वाऽऽश्रयं गता । न्यस्य माणवकस्तम्भे विभुदंष्ट्रामपूपुजन् ॥ ८७ ॥ भरतोऽपि विभोरङ्गसंस्कारासन्नभूतले । त्रिगव्यूतोन्नतं चैत्यं चक्रे योजनविस्तृतम् ॥ ८८ ॥ तत्र चैत्ये चतुर्द्वारे प्रतिद्वारं स मण्डपान् । विचित्रान् सूत्रयामास मणिभिर्मांसलप्रभैः ॥ ८९ ॥ प्रत्येकं तत्पुरः प्रेक्षामण्डपांश्च तुरो व्यधात् । अक्षपाटकचैत्यद्रुपीठपुष्करणीयुतान् ॥ ९० ॥ तं गिरिं दण्डरत्नेन समीकृत्य स तेनिवान् । सोपानैर्योजनोच्छ्रायैरष्टाभिः परिवेष्टितम् ॥ ९१ ॥ लोहयन्त्रमयानेष्यज्जनाशातनशङ्कया । रक्षकानार्यभिस्तत्राकार्षीदुद्दीर्णमुद्गरान् ॥ ९२ ॥ तस्य सिंहनिषद्याख्यप्रासादस्य च मध्यतः । देवच्छन्दं व्यधाच्चक्री रत्नपीठप्रतिष्ठितम् ॥ ९३ ॥ प्रभूपदिष्टपूर्वैस्तद्वर्णचिह्नप्रसादिभिः । बिम्बानि ऋषभादीनां चतुर्विंशतिमातनोत् ॥ ९४ ॥ कृत्वा रत्नमयीः सर्वभ्रातॄणां प्रतिमा अपि । तत्रोपास्तिपरां चक्री स्वमूर्तिमपि निर्ममे ॥ ९५ ॥ बहिश्चैत्यं चितास्थाने प्रभोः स्तूपमपि व्यधात् । भ्रातॄणामपि च स्तूपान् नवतिं स नवाधिकाम् ॥ ९६ ॥ प्रतिष्ठाप्य च बिम्बानि तत्र चैत्ये यथाविधि । चक्रभृत् पूजया-

मास पूजया त्रिप्रकारया ॥ ९७ ॥ स चक्री चैत्यमुत्पश्यन् मुहुर्वलितकन्धरः। वस्त्रान्तमार्जितोन्मज्जद्बाष्पाविलविलोचनः ॥ ९८ ॥ निभृतं मौलिभिर्भूपैर्वृतोऽप्येक इव व्रजन् । मन्दं मन्दांह्रिसंचारमुत्ततार गिरेस्ततः ॥ ९९ ॥ युग्मम् ॥ असौ सैन्यजने. स्वस्ववाहनव्यरणालसै. । शोकप्रच्छादितोत्साहमयोध्यामागमत् पुरीम् ॥ १०० ॥ नाभेयप्रभुपादानां दिवानिशमसौ स्मरन् । त्यक्तान्यव्यापृतिरतत्र तस्थावस्वस्थमानसः ॥ १०१ ॥ तममात्यजनो वीक्ष्य सर्वहृत्यपराङ्मुखम् । इति प्रबोधयामास पितृभ्रातृशुचाकुलम् ॥१०२॥ जगतोऽपि कृतालोकं लोकाग्रपदसंस्थितम् । तातं हतविपत्पातं शोचितुं तव नोचितम् ॥ १०३ ॥ मृत्युनापहृते बन्धुजने रोदिति बालिशः । कृती तु तद्विघाताय धर्ममादाय धावति ॥ १०४ ॥ त्वमप्याक्रान्तलोकेन शोकेन यदि जीयसे । शौण्डीर्यगर्जितं तत्ते न धत्ते धुरमूर्जितम् ॥ १०५ ॥ शक्रोऽप्यक्रीडयत् पीडाविस्मारणविधित्सया । यन्न प्रतिदिनं नानाविनोदैरात्तसंमदम् ॥ १०६ ॥ सांसारिकसुखाम्भोधिमग्नो भरतभूपतिः । विभोर्मोक्षदिनात् पञ्च पूर्वलक्षाण्यवाहयत् ॥ १०७ ॥

अन्येद्युः स्नाननिर्णिक्तगात्रयष्टिरिलापतिः । अन्तरन्तःपुरावासं भूरिभूषणभूषितः ॥ १०८ ॥ रत्नादर्शगृहं प्राप वारस्त्रीपरिवारितः । तारकानिकरोद्भासी शशीव गगनाङ्गणम् ॥ १०९ ॥ युग्मम् ॥ तदा विलोकमानस्य नृपस्य मणिदर्पणम् । रूपादप्रतिरूपस्य प्रतिरूपमजायत ॥ ११० ॥ न्यस्तं मोहेन हिञ्जीरमिव तस्य महीशितुः । तदा लीलालुलत्पाणेर्निर्जगामाङ्गुलीयकम् ॥ १११ ॥ विना तेनाङ्गुलीयेन तदादर्शे कनिष्ठिका । नि श्रीका निष्कलेवेन्दुमूर्तिस्तेन विलोकिता ॥ ११२ ॥ सौभाग्यं भूषणैरेव बिभर्ति वपुरङ्गिनाम् । निश्चेतुमिति मोक्तुं स प्रारेभे भूषणावलीम् ॥ ११३ ॥ विमुच्य मुकुटं हैममयं मौलिं व्यलोकयत् । च्युतार्कबिम्बमुदयगिरिशृङ्गमिवास्तरुक् ॥ ११४ ॥ मुक्ते मौक्तिकताडङ्कयुगे च मुखमार्पभिः । अहंसमिथुनोद्भासिपार्श्वमब्जमिवैक्षत ॥ ११५ ॥ व्यलोकयत् परित्यक्तहारः स हृदयावनीम् । धामिवो-

प्रतिमरंशिमिवां यथानुपालनोः ॥ ११६ ॥ सौरौ विपुलमालिक्यप्रैवेयाम गमैतत । शलाकामिव चेत्यस्य नाजितामजसारिकाम् ॥ ११७ ॥
न पुत्रो स्तूपरत्नौ निरैश्चिष्ट निगतौ । प्रतिमानविनिर्मुक्तौ इन्तीन्द्ररत्नाविव ॥११८॥ हस्तावपास्तमाक्षिप्यकङ्कणौ पश्यति स्म सः ।
कन नवरत्नपत्नाविव विच्छिन्निकन्दलौ ॥ ११९ ॥ शेषा अन्यतुलीर्मुक्ताङ्गुलीयाः स व्यलोकयत् । अपुष्पाग्रमपकतरोः शाखा इव गतत्विषः
॥ १२० ॥ एवं विपुलमाजङ्गारं सोऽपश्यद् वपुरप्रभम् । फाल्गुने मासि निग्रस्तपत्राशामिव पादपम् ॥ १२१ ॥ अचिन्तयच्च देहोऽयं भूषणैरेव
भासते । पत्तापूरिता यमंपलथैरिव मन्दिरा ॥ १२२ ॥ शरीरं मलसज्जूपा यहिर्दुर्गन्धमौरुभिः । मूढैः कर्पूरकस्तूरीचन्दनैरधिवास्यते
॥ १२३ ॥ मजांसप्रमाद् मलैः पूर्वादतोऽङ्गाद्दीनमन्तरा । बोधिजं ध्यानमादेयं सरसो जलजं यथा ॥ १२४ ॥ स्वकीयान् यान्धयानेव मन्ये
भवतामानिमान् । धैर्यं राज्यसुखसुख लेभे लोकोत्तरं पदम् ॥ १२५ ॥ अहं तु विषयास्वादपङ्कनिःशूकशूकरः । गणयामि न नामैवमात्मानं
मनुरेष्यपि ॥ १२६ ॥ चिन्तयन्निरयवं धीमानपूर्वकरणक्रमात् । भावनां भवनाशाय भावयामास भूपतिः ॥ १२७ ॥ अथोच्चैःसिद्धिसौधाग्रस-
मारोहणोत्सवः । क्षितीशः क्षपकश्रेणीनिःश्रेणीमारुरोह सः ॥१२८॥ मुनिस्तदानीमानीतकेवलश्रीकरग्रहः । उत्सवोऽस्तुकचित्तेन सुरेन्द्रेणा-
भ्यगम्यत ॥ १२९ ॥ स्वामपि ना बलीयस्त्वं व्यवहारनयस्य सः । शक्रेणाभिदधे दीक्षालिङ्गमवगृहेतवे ॥ १३० ॥ केशसंभारमुत्पाट्य मुष्टिभिः
पञ्चभिर्नृपः । एवं देवतया दत्तं मुनिवेषमुपाददे ॥ १३१ ॥ सममेव महीशानां सहस्रैर्दशभिस्तदा । साग्रैर्जगृहे दीक्षा दत्तैः स्वाम्यनुवृत्यते
॥ १३२ ॥ तदानीं केवलज्ञानमहिमानं महामनाः । व्यधत्त तस्य नाभेयप्रभोरिव क्रतुप्रभुः ॥ १३३ ॥ भरतोऽपि ततस्तातवर्तनीमनुवर्तयन् ।
जगतीमद्य देशनासारसुधाभिरपनीपनीम् ॥ १३४ ॥ अतिक्रम्य ततः पूर्वजत्वं दीक्षादिनादसौ । आरोहद् मुषिताशेषकष्टमष्टापदाचलम्
॥ १३५ ॥ तत्रैव मासंक्षपणं विधाय शैलेशिकापांगपरायणोऽथ । जगाम सिद्धिं सुरसार्थनाथनिर्वृत्तनिर्वाणमहोत्सवश्रीः ॥ १३६ ॥

॥ इति भरतभूषणनामनि महाकाव्ये चतुर्थः सर्गः ॥

अथ सनत्कुमारगुणसारमसमानमनुमोदन्नाह—

सुच्चिय सणंकुमारो सलहिज्जइ जो तहा समत्थोवि । मोत्तूण दव्वरोगे चिगिच्छगो भावरोगाणं ॥ ३० ॥

[ स एव सनत्कुमारः श्लाघ्यते यस्तथा समर्थोऽपि । मुक्त्वा द्रव्यरोगांश्चिकित्सको भावरोगाणाम् ॥ ]

व्याख्या—'सुच्चिय' स एव 'सणंकुमारो' सनत्कुमारनामा राजर्षिः 'सलहिज्जइ' श्लाघ्यते स्तूयते । 'जो तहा समत्थोवि' यस्तथा तेन जयविजयवैमानिकसुरपुरतः करकनिष्ठाङ्गुलीपुनर्नवीकरणरूपेण प्रकारेण समर्थोऽपि खेलौषधीप्रभृतिलब्धिरत्नाब्धिरपि 'मुत्तूण दव्वरोगे' द्रव्यरोगान् कासकुष्ठादीननेकशो मुक्त्वाऽपधीर्य 'चिगिच्छगो' चिचिकित्सकः । केषाम् । 'भावरोगाणं' भावरोगाणां दुष्कर्मणामिति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्—

स्वस्तिभागस्ति कनकपुरं पुरमिवामरम् । विक्रमी विक्रमयशास्तत्राजनि रसापतिः ॥ १ ॥ शतानि पञ्च तस्यासन् राज्यः स्त्रीरसिकात्मनः । तथाप्यतृप्तस्ताभ्योऽग्निः समिद्भ्य इव सोऽभवत् ॥ २ ॥ एकदाऽसौ व्रजन् राजपाटिकायामलोकत । विष्णुश्रियं गवाक्षस्थां नागदत्तेभ्यवल्लभाम् ॥ ३ ॥ श्रीधाम्नोऽस्य प्रविश्यान्तः सा मोहतिमिरोदये । प्रायेण पञ्चबाणस्य चित्तरत्नमचूचुरत् ॥ ४ ॥ कामादात्मसनाभेस्तां विदित्वा चित्तचौरिकाम् । वृत्ताक्षेपेण चिक्षेपान्तःपुरे पृथिवीपतिः ॥ ५ ॥ अलङ्कारान्वितां बाहुपाशबद्धामिमामयम् । चकार विलसद्मूर्तिं महत्कृताश्रयात् ततः ॥ ६ ॥ लम्भाकाया वियोगेऽस्या राकाया इव चन्द्रमाः । तमसा स्कन्दितो नागदत्तोऽभूद् विकलः किल ॥ ७ ॥ हा ! हंसगमने ! चन्द्रवदने ! पद्मलोचने ! । प्रिये ! विष्णुश्रि ! विष्णुलक्ष्मि ! क्वासि मे देहि दर्शनम् ॥ ८ ॥ क्रोशन्निति वृतो बालैर्मशकैरिव गौरसौ । संभ्रमी बंभ्रमीति स्म चतुष्के चत्वरे त्रिके ॥ ९ ॥ युग्मम् ॥ राजा पुनस्तदासक्तस्तत्याजान्तःपुरं परम् । नेहलोकं न च परं लोकं

रमयति स्म च ॥ १० ॥ स कामं करणाचारं मुक्त्वान्यमविचारकः । सकामं करणाचारं तथैव सह तेनिवान् ॥ ११ ॥ एवं विष्णुश्रिया
सार्धं रमन् स रतिसागरे । जगाम क्षणवत् क्षोणिपतेः कालः कियानपि ॥ १२ ॥ अन्याभिरथ राज्ञीभिस्तस्याः कार्मणमादधे । सपत्न्येकापि
नु स्मार तापत्यः किं पुनश्च ताः ॥ १३ ॥ ततः श्रद्धालुनेवास्यामन्तकेनापि सा हृता । राजा तु तच्छवं कृत्वोत्सङ्गे मूढोऽब्रवीदिति ॥ १४ ॥
विरागाभिमः कोऽपि कोपने ! विहितो मया । यद्य योगिनीव त्वं कृतमौना न भाषसे ॥ १५ ॥ निजं स्मरामि येनागस्तद् मनोऽग्रे त्वया
दाम् । मारेगं रेहि मे देवि ! किंकरः किं करोमि तत् ? ॥ १६ ॥ इत्यनेकप्रकारं स प्रणमन् माननीमिव । सान्त्वयामास तां मोहग्रहिलो
महितां नृपः ॥ १७ ॥ तं तथा विरजं वीक्ष्य मन्त्रव्याजेन मन्त्रिणः । अनयन्नन्यतो मन्त्रिनरास्तत्र शवं बहिः ॥ १८ ॥ नृपतिर्यावदायासीदा-
क्रन्द्य सचिवैः सह । यावत्कस्तावदद्राक्षीद् मृगाक्षीशून्यमञ्जसा ॥ १९ ॥ अथ क्रोशन्नमुं स्तेनामधावत वधाय सः । उत्कण्ठोत्कण्ठनद् दूरं
गुगुणे सचिवैस्त्वयम् ॥ २० ॥ द्वित्रैर्दिनैः समागत्यान्नात्या घात्यायितं नृपम् । प्रहासगर्भितैर्भक्तियुक्तिवाक्यैरसान्त्वयन् ॥ २१ ॥ किमर्थं
देव ! कालोऽयं कृतकोपशमे त्वयि । कथं ते मनसो मोहः परमोहभिदाभृतः ? ॥ २२ ॥ जितविश्वकलाकेले ! कलाकेलिरयं किमु । बाधते
त्वां निजशस्त्रंदांकृतां ! विशारद ! ॥२३॥ देव ! त्वमसि नो नाथः सत्रादेशं तवान्वहम् । वयं विदध्महे तस्मात् प्रसीद किमु सीदसि ? ॥२४॥
धुत्येति वचनं तेषां स्वाप्रदमदिजो नृपः । विष्णुश्रीदर्शनं तां महमुवाच सचिवानिति ॥ २५ ॥ प्रोचुस्ते देव ! सा चण्डकोपाऽद्यास्ते पुराद्
बहिः । मानिनीं मानयामस्तां संभूय चलताऽधुना ॥ २६ ॥ इत्युक्त्वा नृपतिर्नीतो विनीतैरिव मन्त्रिभिः । तत्र, राज्ञीशवं यत्रारक्षे रक्षित-
मस्ति तत् ॥ २७ ॥ तत्र दुर्गन्धमाघ्राय सर्वे नासापुटं व्यधुः । हा ! किमेतदिति प्रोक्ता मन्त्रिणोऽप्यूचिरे नृपम् ॥ २८ ॥ देव !
कोपेन कुपिता देवी कुञ्जेऽत्र वर्तते । गन्धोऽयं दुस्सहोऽन्येषां तस्य गन्धकरेरिव ॥ २९ ॥ तद् यूयमेव गत्वा तां पुरः सान्त्वयत स्वयम् ।

उपरोस्यामहे पश्चादागत्य वयमप्यमूम् ॥ ३० ॥ मन्त्रिभिः प्रेरितो राजा तत् कुञ्जं यावदभ्यगात् । पवनापूर्णभस्त्रावदुच्छूनं तावदग्रतः ॥ ३१ ॥ चलत्कृमिकुलाकीर्णं फलमौदुम्बरं यथा। नवश्रोत्रमुखोद्वान्तविस्रपूयास्रकिल्बिषम् ॥ ३२ ॥ फेरुण्डखण्डिताङ्गं शकुन्याकृष्टलोचनम्। अद्राक्षीदेष बीभत्सतमं निष्प्राणप्रियः शवम् ॥ ३३ ॥ विशेषकम् ॥ स दृष्ट्वेदं सनिर्वेदं चिन्तयामासिवानिति । वराकीयं मृता हन्त नात्मीयमिदं हहा ! ॥ ३४ ॥ अहं कदाग्रही बाल इव मूर्ख इवान्धवत्। शुचिभिः सचिवैरस्मि साधु साधु विबोधितः ॥ ३५ ॥ रे जीव ! यत्कृते जातिलज्जा शीलं कुलं यशः । त्वया त्यक्तं तया त्यक्तो भवानेकपदेऽपि हि ॥ ३६ ॥ त्यक्तोऽनया यथाऽकस्मादायुषापि भवांस्तथा । त्यक्ष्यतेऽसौ यथा त्यक्ता तज्जीव ! सुकृतं कुरु ॥ ३७ ॥ विचिन्त्येति निवर्त्याथ स्वमनोऽश्वं च चञ्चलम् । सौधमागत्य सामन्तचक्रे चक्रेऽधिपं सुतम् ॥ ३८ ॥ सुमताचार्यतः प्राप्य स व्रतं संवृतेन्द्रियः । मृत्वा कल्पेन कल्पेऽभूत् तृतीये त्रिदशस्ततः ॥ ३९ ॥

इतश्चास्ति पुरं रत्नपुरं तत्राभवद् नृपः । नरवाहन इत्येष भिक्षुकाणां मते रतः ॥४०॥ तत्र च्युत्वा स देवत्वाज्जिनधर्मदृढाशयः । जिनधर्माभिधानोऽभूद् महेभ्यतनयो नयी ॥ ४१ ॥ संसारसागरे मर्त्यरत्नद्वीपमुपागतः । स दौर्गत्यच्छिदे रत्नत्रयार्जनपरोऽभवत् ॥ ४२ ॥ इतश्च नागदत्तः स्त्रीवियोगार्तो मृतस्ततः । भ्रान्त्वा तिर्यक्षु विप्रोऽग्निशर्मा सिंहपुरेऽभवत् ॥ ४३ ॥ त्रिदण्डिव्रतमासाद्य द्विमासक्षपणाद्विष्वक् स रत्नपुरमायासीदभासीद् नृपतिश्च तम् ॥ ४४ ॥ स राजपूजितः पूजां लोकानां लभते पुरे । श्राद्धस्तु जिनधर्मोऽस्य भ्रूमात्रेणापि नानमत् ॥ ४५ ॥ त्रिदण्डी पूर्ववैरात् तमनमन्तं विशेषतः । रक्ताक्षो रोषतः सैष विकटाद्कटाक्षयत् ॥ ४६ ॥ अन्यदा पारणे भूपामन्त्रितः सोऽब्रवीदिति । मां भोजयसि चेत् तन्मेऽभिग्रहं भूपते ! शृणु ॥ ४७ ॥ जिनधर्माभिधश्रेष्ठिपृष्ठविन्यस्तभोजनः । पारये परमान्नेनावसथे तव नान्यथा ॥ ४८ ॥ राज्ञोचेऽन्यस्य पृष्ठेऽस्तु त्रिदण्डी नेति सोऽवदत् । द्विधापि जिनधर्मस्य नामन्यपि वहन् रुषम् ॥ ४९ ॥ तदा तदाग्रहं

राजा कालिनः सत्त्वयानयम् । सद्धर्मोपदिष्टे तस्मै प्रभुः पृष्ठमदाद् मुदा ॥ ५० ॥ स तत्पायसोत्तप्तपात्रप्लोषितपृष्ठजः । सत्त्वकाष्ठां परां
गतः सुगतं इव पवित्रताम् ॥ ५१ ॥ पाचिन्तयच्च रे जीव ! पूर्वजन्मनि जन्मिनाम् । दुःखापकारिन् ! किं पृष्ठतापं न सहसेऽधुना ? ॥ ५२ ॥
अग्निस्नानं विना कार्यं धर्मरोगस्य किं स्पृशेत् ? । रे जीव ! तव पक्वस्य कथं पाऽऽर्जवसंभवः ? ॥ ५३ ॥ इत्यदीनेन लीनेन सत्त्वे सत्त्वध-
नाऽमुना । सुस्थितेन स्थितं यावत् परिव्राजकभोजनम् ॥ ५४ ॥ कल्याणपात्रं कल्याणपात्रस्यास्य त्वचेतनम् । भागीव भागमादाय पृथग् जज्ञे
गृहाश्रमः ॥ ५५ ॥ अथागत्य निजागारमापृच्छ्य स्वजनानयम् । दीक्षां गृहीत्वाऽऽरोहद् विवेकमिव पर्वतम् ॥ ५६ ॥ सातादिवाप्रमत्तत्व-
शिखरं मुनिशेखरः । तत्रारुह्य किलाप्ततरमनशनं व्यधात् ॥ ५७ ॥ अन्वर्धमासं प्रत्याशं परां काष्ठां चकार सः । लोकपालैः समं
सम्यं मार्गेन्द्रो घटयन्निव ॥ ५८ ॥ तस्योत्सर्गजुषो गृध्राः पृष्ठमांसादनं व्यधुः । अतः सत्यं चकाशे यद् मुनेरपि घनेऽत्ययः ॥ ५९॥ तत्रैवं
स्वपराशतो सते चारमिव व्यधुः । महात्मा सोऽधिसेहे तु निजदेहेऽपि निःस्पृहः ॥ ६० ॥ षष्टिं दिनान्यनाहारः प्राप्यायु पारमात्मनः । इन्द्रो
बभूव सौधर्मे जिनधर्मो महामुनिः ॥६१॥ त्रिदण्डरूपस्याभियोग्येन कर्मणोपार्जितेन सः । मृत्वाऽस्य वाहनत्वेन तत्राभूदभ्रभूपतिः ॥६२॥ कदा-
चित् कर्मणा जीवस्तेन कर्म कदाचन । यथाऽथ क्रियतेऽमूतौ तौ भवान्तरितौ तथा ॥ ६३ ॥ गजश्च्युत्वा भवं भ्रान्त्वा मर्त्ये चाज्ञानकष्टतः ।
यशोऽसितास इत्यासीदसौ कैलासभूधरे ॥ ६४॥

इतश्च भारते क्षेत्रे कुरुमण्डलमण्डनम् । इहास्ति हास्तिनपुरं पुरं सुरपुरोपमम् ॥ ६५ ॥ शुनासीरनिभस्तत्रारिभूभृत्पक्षशातनः ।
विश्वस्याप्यश्वसेनोऽभूद् विश्वसेनो नरेश्वरः ॥ ६६ ॥ सहदेवीति तस्यासीद् देवी देवीव रूपतः । दासो यदाननस्येन्दुरङ्कितः शङ्कितो जनैः
॥ ६७ ॥ च्युत्वाऽथ जिनधर्मेन्द्रस्तस्याः कुक्षिकुशेशये । चतुर्दशमहास्वप्नसूचितः समवातरत् ॥ ६८ ॥ जिनो वा चक्रवर्ती वाऽवतीर्णोऽय-

मिति स्वयम्। मिथः स्वप्नान् विचार्याऽन्वमोदेतां राजदम्पती ॥ ६९ ॥ अथो नवसु मासेषु पूर्णेषु नृपवल्लभा। विश्वजैत्रमियं पुत्रमसूत
धीरिव स्मरम् ॥ ७० ॥ जन्मोत्सवं विधायोच्चैः पितरौ दुस्तरौजसः। सनत्कुमार इत्यस्य व्यधातामभिधामथ ॥ ७१ ॥ पञ्चोच्चग्रहजन्माऽसौ
पुत्रः पञ्चजनेशितुः। धात्रीभिः पञ्चभिः पाल्यमानोऽभूत् पञ्चवार्षिकः ॥७२॥ शस्त्रशास्त्रकलापात्रं वर्धमानः क्रमादयम्। रमारामाभिरामा-
ङ्गोऽभवद् यौवनमाश्रितः ॥ ७३ ॥ महेन्द्रसिंहनामाऽस्य सपांशुक्रीडितः सुहृत्। बभूव शूरकालिन्दीसुतः सत्प्रीतिविश्रुतः ॥ ७४ ॥ अन्यदा
पन्यदानाग्निव्यंशुकानिव किंशुकान्। तन्वंस्तापयितुं पान्थान् वसन्तर्तुरवर्तत ॥ ७५ ॥ समं सनत्कुमारेण समहेन्द्रेण भूपतिः। उद्यानमगमत्
क्रीडाविधौ तत्र मधूत्सवे ॥ ७६ । कुमारः सारवीक्षार्थं निजाश्वस्य कशामदात्। यावत् तावदसौ भेजे मनसोऽपि नवं जवम् ॥ ७७ ॥
तस्मिन्नदर्शनीभूते वृत्तान्तं विश्वसेनराट्। ज्ञात्वाऽनुयान् महेन्द्रेण निषिद्धः स्वपदग्रहम् ॥ ७८ ॥ देव! प्रसादमाधाय निवर्तस्व पुरं प्रति।
अहं शुद्धिं कुमारस्यानेष्ये कतिपयैर्दिनैः ॥७९॥ एवमुक्त्वा नृपं म्लानमुखाब्जं शूरनन्दनः। जगाम मित्रमन्वेष्टुं सन्ध्याराग इव क्षणात् ॥८०॥
स भ्राम्यन्मन्युहृत्पूरपूरितः परितोऽपि हि। सनत्कुमारमग्रस्थं जातरूपमथैक्षत ॥ ८१ ॥ प्रतिग्रामं प्रतिपुरं प्रत्यद्रि प्रतिपत्तनम्। पर्यट-
न्नटवीं चापि निशश्राम न नाम सः ॥ ८२ ॥ यावत् संवत्सरं भ्राम्यन् सनत्कुमारदिदृक्षया। प्रवृत्तिमपि न प्राप क्वापि दुःस्थ इव श्रियम्
॥८३॥ सदा भ्रमन्नरण्यानीं सदागतिरिवान्यदा। क्षीरार्णवमिवाद्राक्षीदग्रतो विपुलं सरः ॥८४॥ स हंसवयसं स्वच्छं प्रकृत्या विपुलाशयम्।
दृष्ट्वैव मुमुदे सारं शासारं तं कुमारवत् ॥८५॥ तत् प्रविश्य सरो यावज्जलकेलिं चकार सः। तावदस्याभवत् कर्णसङ्गी संगीतकध्वनिः ॥८६॥
ततस्तदनुसारेण मज्जत्रेण द्योचकैः। शिबिरं सरसः सेतुपृष्ठेषु स दृष्टवान् ॥८७॥ उद्धलत्पुच्छकल्लोलं वाजिवृन्दं समुद्रवत्। तत्रैकतो
ददर्श गजानपि घनानिव ॥८८॥ शिबिरदक्षिणेनैषि तेनाशोकवनीतले। आस्थानी च सुधर्मेव शस्या कस्यापि भूपतेः ॥८९॥ परितस्तां

च्छायायां मूर्च्छितो न्यपतद् भुवि ॥ १०९ ॥ तद्वृत्तवासिना यक्षेणोक्षितोऽयं ततोऽम्भसा । लब्धसंज्ञो जलं पीत्वाऽपृच्छत् कस्त्वं कुतो जलम् ? ॥ ११० ॥ निष्कारणोपकारी स कुमारेणोदितोऽवदत् । अहं यक्ष- समानैष मानसात् त्वत्कृते जलम् ॥ १११ ॥ ऊचे कुमारस्तापो मे शाम्यस्तत्रैव मज्जनात् । यक्षश्चक्रे तथाऽमज्जदयं सज्जश्च जातवान् ॥ ११२ ॥ तत्रासितात्तयक्षेण वीक्षितः पूर्ववैरिणा । खलीकृतश्च, यत्नेमद्वेषौ जन्मानुगामिनौ ॥ ११३ ॥ कुमारयक्षौ तौ कल्पाम्भोदसोदरगर्जितौ । युध्यन्तौ मल्लयुद्धेन ददृशाते सुरैरपि ॥ ११४ ॥ यक्षो मुष्टिप्रहारेण कुमारेण हतोऽनशत् । हृष्टाश्चास्योपरिष्टाच्च पुष्पवृष्टिं व्यधुः सुराः ॥ ११५ ॥ मानसादवतीर्णोऽयमथ स्त्रीपदपद्धतिम् । अद्राक्षीत् पथि पद्मेषुपूगाजीमिव सज्जिताम् ॥११६॥ विस्मितोऽग्रे गतोऽपश्यदसावष्टौ कुमारिकाः । आसामाशाधिदेवीनामिनामज्जश्च मानसे ॥ ११७ ॥ अतिसृत्य कुमारस्ता नन्दनोद्यानमध्यगाः । अपृच्छद् नाम का यूयं किमरण्येऽत्र तिष्ठथ ? ॥ ११८ ॥ ताः प्रोचुरित एवास्ति पुरी नः प्रियसंगमा । विद्याधरपतेर्भानुवेगोऽस्यां तद्भुवो वयम् ॥ ११९ ॥ अस्त रविरुपेत्येष भद्र ! तस्माद् भवानपि । विश्रामं कुरुतामेत्य नगर्यां न, क्व यास्यति ? ॥ १२० ॥ इत्युक्त्वा ताभिरात्मीयकिंकरैर्दर्शिता ततः । नीतो नगर्यां चण्डांशुरपि द्वीपान्तरं ययौ ॥ १२१ ॥ ततः कञ्चुकिना ताभिर्नायितो राजमन्दिरम् । असावभ्युत्थितो भानुवेगेनापि महीभुजा ॥ १२२ ॥ विहितोचितसन्मानो राज्ञाऽसौ भणितस्ततः । कुमार ! विक्रमाधार ! ममाष्टौ कन्यका इमाः ॥ १२३ ॥ जेता तदसिताक्षस्य तामसस्येव भानुमान् । पतिर्दिशामिवैतासां त्वं दिष्ट्योऽस्यर्चिमालिना ॥ १२४ ॥ इमास्तदुद्वहेत्युक्तः कुमारस्तत् तथाऽकरोत् । ताभिः सहैकपल्यङ्के वासवेश्मन्यशेत च ॥ १२५ ॥ अत्रान्तरे छलान्वेषी निद्राणं तं परिश्रमात् । असिताक्षः समुत्पाट्याक्षिपद् गिरिसरित्तटे ॥ १२६ ॥ यावज्जागर्ति वयसां विरावैर्विगमे निशः । कुमारस्तावदात्मानं शयितं भुवि दृष्टवान् ॥ १२७ ॥ न ताः कन्या न तद् वेश्म न तद् राज्यं न सा पुरी । किमेतदित्यसावत्यर्थविस्मितोऽथ व्यचिन्तयत् ॥१२८॥

पाणिग्रहस्वरूपः किं स्वप्नोऽभूदयवाऽस्त्ययम् । यद्वाऽयं न यतोऽभ्वनापहृतोऽस्म्येक एव हि ॥ १२९ ॥ पाणिग्रहस्वरूपस्तद् नूनं स्वप्नोऽभ-
पद् मम । मत्त एव पुनः पाणिकङ्कणेनामुना मनाक् ॥ १३० ॥ कुमारश्चिन्तयित्वेत्थमविखिन्नमनास्ततः । धम्मिल्लं परिधानं च दृढीकृत्याम्र-
तोऽव्रजत् ॥ १३१ ॥ यावत् किञ्चिदसौ वर्त्म ययौ तावत् पुरो वने । दिव्यं भवनमद्राक्षीदेकमद्रितटीगतम् ॥ १३२ ॥ इन्द्रजालं किमप्येत-
दपि स्यादिति जल्पितवान् । यावत् तावदिहाश्रौषीदेष आक्रन्दितध्वनिम् ॥ १३३ ॥ अथ यान्वत् कारुण्यात् कैयं किं रोदितीत्ययम् । दध्यौ
तावद् व्यलापीत् सेति दीनतया स्वरम् ॥ १३४ ॥ कुरुवंशनभश्चन्द्र ! विश्वसेननृपाङ्गज ! । सनत्कुमार ! चेद् नेह भर्ताऽमुष्मिन् कथञ्चन ॥१३५॥
तत् पश्य भयंरितमुदीर्येति स्थिता तत । कुमारो विस्मितोऽधावत् तत्स्वरूपं निरूपितुम् ॥ १३६ ॥ उत्फालश्चन्द्रशालायां गतश्चायमलो-
कत । उद्बन्धनगतामेतामनिमेषां सुरीमिव ॥ १३७ ॥ आर्यपुत्रस्तु तत्पाशग्रन्थिं छुरिकया रयात् । छित्त्वा तामङ्कमारोप्य वीजयामास घाससा
॥ १३८ ॥ विलोक्य सापि मूर्च्छान्ते कुमारमिति साध्वसात् । अङ्काद् नोत्थातुमशकत् पङ्कादिव जरद्गवी ॥ १३९ ॥ आर्यपुत्रोऽब्रवीदेतां
स्मितविच्छुरिताधरः । किं ते सनत्कुमारः स्यादिति यस्य कृतेऽरुथाः ? ॥ १४० ॥ साऽभ्यधत्त स मे भर्ता मनोरथनिवेशितः । पितृभ्यां
यस्य तस्यांसं पूर्वमदायिषि ॥ १४१ ॥ असंवृत्तविवाहां तु मामेकः खेचराङ्गजः । कुट्टिमात् पद्मस्येहानीय शून्याश्रयेऽमुचत् । १४२ । आ-
गता नु गतः क्वापीत्युक्तमात्रेऽनया तदा । कुमारः खेचरेणैत्योल्लालितः कन्दुको यथा ॥ १४३ ॥ हाहारवपरा सा तु मूर्च्छिता पतिता
भुवि । वज्रघेव कुमारेण पतता स तु मारितः ॥ १४४ ॥ आर्यपुत्रः समाश्वस्य तामथ स्वं न्यवेदयत् । स्त्रीरत्नं पर्यणैषीच्च सुनन्दाख्यामि-
मां मुदा ॥ १४५ ॥ कुमारमारितस्यास्य स्वसा संध्यावलीत्यथ । प्राप्ताऽद्राक्षीद् निजं विद्युद्वेगाख्यं मृतमग्रजम् ॥ १४६ ॥ क्रुद्धा साऽऽदौ
ततोऽस्मार्षीदिति नैमित्तिकोदितम् । यद् भ्रातृवधकोऽमुष्याः परिणेता भविष्यति ॥ १४७ ॥ विमृश्येति विवाहार्थमार्यपुत्रमुपास्थित ।

सुनन्दानुमतेनेयमभ्युदुह्यत चामुना ॥१४८॥ अत्रान्तरे समायातौ खेचरौ द्वौ सुराविव । आर्यपुत्रं प्रणम्येति प्राञ्जली समभाषताम् ॥ १४९ ॥ हरिचन्द्रचन्द्रसेनौ देवाऽऽवामभिधानतः । चन्द्रवेगभानुवेगखेचराधिपयोः सुतौ ॥ १५० ॥ तातावपि समायान्तौ तिष्ठतस्त्वामुपासितुम् । त्वदर्थं प्रहिते ताभ्यामेते च रथसंमखी ॥ १५१ ॥ यस्मादशनिवेगाख्यः खेचरेन्द्रस्तवोपरि । आगच्छन् सबलोऽस्त्यात्मसुतं श्रुत्वा त्वया हतम् ॥ १५२ ॥ इति यावत् कुमाराग्रे शुद्धिमावेद्य तौ स्थितौ । चन्द्रवेगभानुवेगौ तावत् तावप्युपागतौ ॥ १५३ ॥ प्रणतिमार्यपुत्राय तदा संध्यायली स्वदात् । वेगादशनिवेगश्च परिपन्थी समागमत् ॥ १५४ ॥ चन्द्रवेगभानुवेगौ ससैन्यावतिदुर्धरौ । बलेनाशनिवेगस्य सह योद्धुमढौकताम् ॥ १५५ ॥ सैन्ययोरुभयोः शस्त्राशस्त्रिवह्निकणरुङ्कलात् । तदा संग्रामभीत्येव तत्रसुस्तारका दिवि ॥ १५६ ॥ मरुग्णा युध्यमाने-याश्चेन चित्रेण युध्यताम् । पाणिपादाननैः पद्मैरिव रेजे तदाजिभूः ॥ १५७ ॥ कुमारोऽशनिवेगेनाक्राङ्क्षिशस्त्रास्त्रदारुणम् । रणं चकार परितो वीक्ष्यमाणः सुरासुरैः ॥ १५८ । अत्रान्तरे कुमारस्य पूर्वपुण्यमिवाङ्कवत् । चक्रमागात् करे तेन लूनं वैरिशिरोऽमुना ॥ १५९ ॥ चक्री सनत्कुमारोऽयं चतुर्थो जयतादिह । इति देवाः स्तुवन्तोऽस्मिन् पुष्पवृष्टिं व्यधुस्तदा ॥ १६० ॥ ततः कुमारमशनिवेगविद्याधरेशितुः । राज्यलक्ष्मीरुपैयाय वाजादित्यमिव द्युतिः ॥ १६१ ॥ ततो वैताढ्यमगमच्चक्री विद्याधरैः सह । तत्र विद्याधराधीशपदे तैरभ्यषिच्यत ॥ १६२ ॥ नन्दिनीश्चन्द्रवेगस्य शतमन्याः सहस्रशः । पर्यणैषीदसौ विद्याभृतां हृद्याः कुमारिकाः ॥ १६३ ॥ वैताढ्यगिरिकूटेषु जिनायतनकोटिषु । कुमारः कारयामास ततोऽष्टाहीमहोत्सवान् ॥ १६४ ॥ स्वैरं क्रीडन् कुमारोऽयमिहायातोऽद्य विद्यते । भवांश्च दत्तसंकेत इवास्य मिलितः पुन. ॥ १६५ ॥

उक्ते बकुलमत्येति स्वचरित्रेऽखिलेऽपि हि । मुक्तनिद्र इवोदस्थात् कुमारस्तल्पतस्तदा ॥ १६६ ॥ ततश्चमूसमूहेन वैताढ्य गत-

पानयम् । प्रस्तावे क्वापि विप्रः श्रीरित्येति ससौष्ठवम् ॥ १६७ । तव देव ! वियोगेन पितरावतिदुःखितौ । तत् तयोर्दर्शनं कर्तुं प्रसादः
क्रियतां मयि ॥ १६८ ॥ श्रुत्वेति तत्क्षणादेव विमानेनाव्रजन् नभः । प्राप्तः सनत्कुमारोऽथ हस्तिनाग्रपुरं पुरम् ॥१६९॥ प्रजाः पुरप्रवेशोऽस्य
मुदा स्पृतंमपिप्लवः । असंमान्त्य स्थामीशु पेम्मनामादहन् शिखाः ॥ १७० ॥ कुमारं पितरौ दृष्ट्वाऽभजतां परमां मुदम् । ऋद्धिमस्य विलो·
क्यैतौ तद् न विप्रो यदूहतुः ॥ १७१ ॥ अथासौ साधयामास त्रिखण्डामपि क्षितिम् । अखण्डितप्रतापश्च साम्राज्यं समपालयत् ॥१७२॥

अथास्य धर्मिणो भोगान् भुञ्जानस्यान्यदा भुवि । सौधर्मेन्द्रसभां प्रापेशानतः संगमः सुरः ॥ १७३ ॥ सौधर्मवासिनो देवाः प्रभया
तस्य निष्प्रभाः । जज्ञिरे भास्वतो भासा भर्त्सितास्तारका इव ॥ १७४ ॥ पृष्टोऽथ निखिलैर्देवैर्देवेन्द्रः सान्द्रविस्मयैः । कथं संगमदेवस्य
स्वामिंस्तेजोऽतिदुस्सहम् ? ॥ १७५ ॥ शक्रोऽभ्यधत्त विदधे तपोऽनेनातिदुस्तपम् । आचाम्लवर्धमानाख्यं तेजस्तेनौजसायते ॥ १७६ ॥
तयेति पुनरूचुस्ते कोऽप्यन्योऽपि क्वचिद् विभो ! । विद्यते ह्युत्तेजोभिर्भासुरोऽयं सुरो यथा ? ॥ १७७ ॥ ततः शक्रोऽब्रवीदस्ति
हस्तिनाग्रपुरेश्वरः । क्षितौ सनत्कुमारोऽस्मादपि रूपमहोमहान् ॥ १७८ ॥ जयश्च विजयश्चाथ देवौ शक्रस्य तद्वचः । अश्रद्दधानौ
तं द्रष्टुं स्वर्लोकादवतेरतुः ॥ १७९ ॥ विप्रवेषधरावेतौ प्रतीहारनिवेदितौ । प्रविश्य स्नानशालायां तत्रोर्वीशमपश्यताम् ॥ १८० ॥
अथो विप्रावपि तौ तस्य रूपातिशयरञ्जितौ । रोमाञ्चोत्पुलितौ मौलिं धुन्वानाविदमूचतुः ॥ १८१ ॥ अहो ! तैलाभिषक्तस्या·
प्यभूषणभूतोऽपि हि । वराशिपरिधानस्याप्यस्य रूपं निरूप्यते ॥ १८२ ॥ रूपं सनत्कुमारे यत् तद् न वैमानिकेष्वपि । इति
शक्रवचो नूनमभूषोषमजायत ॥ १८३ ॥ अथाह चक्री हे विप्रौ ! किमागमनकारणम् ? । तावूचतुर्नृपान्यद् न तव रूपनिरूप·
णात् ॥ १८४ ॥ तद् नृप ! रूपयुक्तस्योत्तार्य वेधास्तवोपरि । अक्षिपल्लवणं दिक्षु तेन क्षारपयोधयः ॥ १८५ ॥ रूपगर्वाद्यो·
॥ ३ ॥

धीशः स्मित्वाऽथोचद् द्विजोत्तमौ ! । युवामसमये रूपं निरूपितुमुपागतौ ॥ १८६ ॥ अतः क्षणं प्रतीक्षेथां स्नात्वा यावदहं तनूम् ।
अलंकुर्वे सभां चापि प्रतिहारादिनोद्भटाम् ॥ १८७ ॥ ततस्तौ पट्टशालैकदेशे राज्ञोदितौ स्थितौ । स्नात्वा भूमानपि स्फारं चक्रे शृङ्गार-
मादरात् ॥ १८८ ॥ चामरैर्वीज्यमानश्च स्तूयमानश्च वन्दिभि- । वन्द्यमानश्च भूपाद्यैरथासावासदत् सदः ॥ १८९ ॥ कनकस्थालमारोप्य
कर्णिकादीपिकास्ततः । चक्रे वारवधूमुख्यास्तस्य नीराजनाविधिम् ॥ १९० ॥ अथाहूताविमौ विप्रौ चक्रिणं वीक्ष्य तत्क्षणात् । जातौ
दुःखाग्निधूम्याभिरिव कृष्णमुखच्छवी ॥ १९१ ॥ अथाह विस्मितश्चक्री युवां किं विमुखाविव ? । तावूचतुरमित्यत्वं दृष्ट्वा रूपश्रियस्तव
॥ १९२ ॥ यतो देव ! यदाऽभ्यज्यमानोऽभूस्त्वं तदा तव । आसीदप्रतिरूपस्य रूपलक्ष्मीरनश्वरी ॥ १९३ ॥ अधुना तु घुनात्येषा मनसो
मुदमावयोः । कुष्ठेनोत्तिष्ठमानेन लुप्यमाना शनैः शनैः ॥ १९४ ॥ नृपोऽब्रवीद् युवां विप्रौ ! जानीथः कथमप्यहो ! । तावूचतुः सुरावावां
जानीवो दिव्यचक्षुषा ॥ १९५ ॥ तव रूपश्रियं शक्रादाकर्ण्यावां समागतौ । विप्रवेषधरावेतौ कौतुकेन विलोकितुम् ॥ १९६ ॥ दृष्टा चेयं
विनष्टा च धिग् नृणामस्थिरं वपुः । इत्युक्त्वा तौ सुरीभूय मङ्क्षूदपततां दिवि ॥ १९७ ॥

ततो नरपतिः पश्यन् विस्मयेन निजं वपुः । ददर्शायं गतच्छायं भूषितं भूषणैरपि ॥ १९८ ॥ अथैष जातवैराग्यश्चिन्तयामासिवा-
निति । इत्थमेत्रीव देहोऽयमहो ! क्षणविनश्वरः ॥ १९९ ॥ यत् प्रातः सिद्धमाहार्यमपराह्णेऽन्नं विनश्यति । तदाधारं वपुर्नृणां किल स्थैर्यं
कुतोऽश्नुताम् ? ॥ २०० ॥ नवश्रोत्रविलेऽमुष्मिन् कलेवरगृहे किल । जीवस्य वसत कालव्याजतः कुशलं कियत् ? ॥ २०१ ॥ यद्भोगा-
दसमुच्छिष्टं विनष्टं द्रव्यमुच्यते । मलिनं च पयोऽप्यस्य वपुषः केव शोचना ? ॥ २०२ ॥ यो देवसाधुबन्धुभ्योऽप्यधिकं वीक्ष्यते जनैः । दृष्टः
पतिरियानिष्टे स देहो नात्मनः सखा ॥ २०३ ॥ तदस्य नश्यतो लाभं ग्रहीष्ये धर्मकर्मणा । अवक्रयकुटीवायं वहतां किमनेन मे ? ॥ २०४ ॥

ल्पगुरुगिरिस्यान्तरंगात्मना नृपः । सद्यो विहाय साम्राज्यं पश्चात्तपरागमत् ॥ २०५ ॥ सत्वरं व्रतमादाय सुस्थिताचार्यसंनिधौ ।
मृगराज इवैकाकी विजहार वनाद्वनम् ॥२०६॥ युग्मम् ॥ चतुःषष्टिसहस्रान्तःपुरस्त्रीपरिचारिता । निरानन्दा सुनन्दा स्त्रीरत्नं चाद्भुतानि
गुणरत्न इवैकाकी विजहार वनाद्वनम् ॥ चतुःषष्टिसहस्रा नवनिधयो नव । द्वात्रिंशच्च सहस्राणि भूपा मुकुटवर्धनाः ॥ २०८ ॥ रत्नान्यपि चिरदानि
तान्यतो ॥ २०७ ॥ स्फुरन्तो दिव्यरूपेण पद्माया निधयो नव । द्वात्रिंशच्च सहस्राणि भूपा मुकुटवर्धनाः ॥ २०८ ॥ रत्नान्यपि चिरदानि
सकारीति प्रतुरंग । षाण्मासीं यतिनं तमन्वगुः प्रतिकाननम् ॥ २०९ ॥ विशेषकम् ॥ पुण्यकर्मणि तं राज्यमिति प्राज्यमनुव्रजत् । सिंहा-
वलोकितेनापुलोकं स्तोकं स तु प्रभुः ॥ २१० ॥ असौ कांदविकाया छगलितकेणा पारणाम् । चतुर्थतपसो लेभे ततः षष्ठतपोऽकरोत् ॥२११॥
ततः प्रभृति पेजातिकमैः कदशनैरपि । रोगास्तस्याभवन् कासकच्छूश्लेष्मज्वरादयः ॥ २१२ ॥ शिरोऽक्षिकर्णहृत्कुक्षिनखपृष्ठेषु जज्ञिरे ।
तस्य शूलानि सोऽति पूर्वकर्मविपाकतः ॥ २१३ ॥ सप्तवर्षशतीमस्य सहतः शूलवेदनाः । कफविप्रुण्मलामर्शाद्योऽजायन्त लब्धयः ॥२१४॥
स योगी निःस्पृहो देहे विदेहे रोगविप्लवम् । लब्धिमानपि दुष्कर्मविजयध्यानतन्मनाः ॥ २१५ ॥

अस्मिन्नवसरे शक्रः सुधर्मायामवस्थितः । प्राशंसत् तं शिरो धुन्वन् पुरतः स्वर्गिणामिति ॥ २१६ ॥ सनत्कुमारयोगीन्द्रोऽहो !
माहात्म्यमद्भुतम् । चिकित्सयति नो रोगान् प्रार्थितस्त्रिदशैरपि ॥ २१७ ॥ जयश्च विजयश्चेति श्रुत्वा तावेव नाकिनौ । सत्त्वं सनत्कुमारस्य
द्रष्टुमुपेतनुदियः ॥ २१८ ॥ वैद्यवेषधरौ गत्वा नत्वा तमिदमूचतुः । त्वामुल्लाघं मुने ! कुर्वोऽनुजानीहि चिकित्सितुम् ॥ २१९ ॥ एवं पुनः
पुनस्ताभ्यामर्थितः स महामुनिः । समाधिं पारयित्वाह भाषासमितिसंमितः ॥ २२० ॥ धर्मशीलौ ! युवां वैद्यौ नाम रोगांश्चिकित्सथः ।
पुनः कथयतं पूर्वं द्रव्यतां भावतोऽथवा ? ॥ २२१ ॥ काशकुष्ठादयश्चैते द्रव्यात्, कर्माणि भावतः । तद् द्रव्यरोगानहमप्यलंभू-
ष्णुश्चिकित्सितुम् ॥ २२२ ॥ तथाहि पश्यतमिति क्षुपाद्यः स्वाङ्गुलीमथ । श्लेष्मणा मर्दयित्वाऽयं चक्रे दीपशिखासखीम् ॥ २२३ ॥

ततश्चमत्कृतावेतौ चलत्कुण्डलधारिणौ । प्रत्यक्षीभूय तं योगिनाथमस्तुवतामिति ॥ २२४ ॥ यथाऽसि द्रव्यरोगाणामतिशायी चिकित्सकः । तथैव भावरोगाणामपि त्वं योगिनां वर ! ॥ २२५ ॥ धन्यस्त्वं सुकृती सत्त्वश्लाघां यस्य पुरन्दर । चक्रे, त्वां द्रष्टुमायावस्तेनावामपि कौतुकात् ॥ २२६ ॥ लौकिका योगिनः कायस्थैर्योपायशिलाञ्छिन ! रङ्का इव न कर्मारिमारिमाधातुमीशते ॥ २२७ ॥ भवांस्तु लब्धिमानेयमपि देहानुपेक्षया । समिताद्युद्यमन् कर्मानीकमर्माणि भेत्स्यति ॥ २२८ ॥ तदुग्रमतिशीर्यन्तीं तनूं स्वामपि योऽन्वहम् । उपेक्षतेऽन्तरङ्गारीञ्जेतुं तस्मै नमोऽस्तु ते ॥ २२९ ॥

तौ स्तुत्वेति सनत्कुमारममरौ नत्वा च सत्वारमतां तत्वा चास्य तथा यथागतमगच्छातां सुधर्मामभि ।
सोऽपि स्वं शमिराट् समाप्य शरदां लक्षैस्त्रिभिः सभूत सर्वायुः समये विपद्य च सुरः कल्पे तृतीयेऽभवत् ॥ २३० ॥

॥ इति सनत्कुमारकथा ॥ ३० ॥

अथ भवभ्रमणोपजातखेदविच्छेदनिबन्धन गजसुकुमालच्छायाशालमभिश्रयन्नाह,—

जस्स जलणेण सीसं झाणेण य झत्ति कम्म नीसेसं । पज्जलिय समकालं गयसुकुमालं च तं नमिमो ॥३१॥
[ यस्य ज्वलनेन शीर्षं ध्यानेन च झटिति कर्म निःशेषम् । प्रज्वलितं समकाल गजसुकुमाल च त नमाम ॥ ]

संक्षेपार्थोऽस्या व्यक्त एव, व्यासार्थस्तु कथानकादवसेयः, तच्चैतत्,—

पुरी द्वारवतीत्यास्ति पश्चिमाम्भोधिरोधसि । हेमहर्म्या हरिहयो हरिद्वेतोर्व्यधत्त याम् ॥१॥ दशार्हो दशमस्तत्र वसुदेवो वसूपमः । आसीत् क्षत्रशिरोरत्न पिता पिताम्बरस्य य ॥२॥ देवकी सेवकीभूतभूर्भुव स्वर्वधूजना । तत्प्रियाऽजनि यत्कुक्षावुवास गरुडध्वजः ॥३॥ सान्यदा यदुरत्न-

स्य नेमिनाथजिनेशितुः । गत्वा पादौ समायान्ती याप्ययानमधिष्ठिता ॥४॥ निजसौधतले काञ्चित् पुत्रं पुत्रवतीं निजम् । चुम्बन्तीं लालयन्ती चो-
ल्लापयन्तीमलोकत ॥५॥ युग्मम् ॥ ततोऽसौ चिन्तयामास बाष्पाविलविलोचना । धन्येयं या स्वयं स्वीयमेवं लालयते सुतम् ॥६॥ धिक्पुनः पुण्य-
विकलां किल मां कोकिलामिव । यदपत्यान्यपाल्यन्त यदन्यैश्चिरजीविभिः ॥ ७ ॥ युग्मम् ॥ मत्वा मातुरभिप्रायं श्रीकृष्णो नैगमेषिणम् ।
देवमाराधयामास तुष्टः सोऽप्येवमब्रवीत् ॥ ८ ॥ भावी तवानुजः किन्तु यौवने प्रव्रजिष्यति । तस्मिन् गते ततः कृष्णः प्रातर्मातुर्न्यवेदयत्
॥ ९ ॥ तदा च देवकीकुक्षौ देवः कोऽपि दिवश्च्युतः । अवतीर्णो गजस्वप्नसूचिताद्भुतवैभवः ॥ १० ॥ बभूव समये विश्वरूपरूपस्ततः
सुतः । नाम्ना गजसुकुमालो देवक्या लालितः स्वयम् ॥ ११ ॥ उपयेमे दुमापसुतामेष नाम्ना प्रभावतीम् । सोमां च क्षत्रियाजातां सोमश-
र्मद्विजाङ्गजाम् ॥ १२ ॥ उद्यौवनः समं ताभ्यां प्रियाभ्यामन्यदा गजः । श्रीनेमिव्याख्यया जातवैराग्यो व्रतमग्रहीत् ॥ १३ ॥ पृष्ट्वा प्रभुं श्मशाने
स मतिमान् प्रतिमां व्यधात् । दृष्टः श्वशुरकेणात्र ब्रह्मणा सोमशर्मणा ॥ १४ ॥ सैष प्रव्रज्य मत्पुत्रीं व्यडम्बयदिति क्रुधा । तन्मूर्ध्नि विदधे
पालीं मृदाऽमृदुमना द्विजः ॥ १५ ॥ चिताङ्गारचितां चक्रे तामसौ तामसौजसा । गजस्तया ज्वलन्त्याऽऽसीद्दीपप्येव नगो निशि ॥ १६ ॥
उत्तमाङ्गे ज्वलत्युच्चैर्गजो गजनिमीलिकाम् । चक्रे शरीरं मन्वानः सर्वथा पृथगात्मनः ॥ १७ ॥ वह्निर्यथा यथा तस्याऽज्वलद् मूर्ध्नि तथा तथा ।
पाताजयन्मनश्चेतः शमामृतमजीजनत् ॥ १८ ॥ अन्यत्र कारणं कार्यमन्यत्रास्य तदाऽभवत् । जज्वालास्य शिरस्यग्निः कर्माऽदहत चेतसि
॥ १९ ॥ अन्यथ कारणं पश्चात् कार्यं चित्रममूलुपुरः । तमो विलीनमग्रेऽस्य पश्चाज्ज्ञानेन्दुरुद्ययौ ॥ २० ॥

उद्दूद्धानश्रीप्रणयरसनिर्वासितरजा गजात्मा शैलेशीविधिमयवधूप्रोषितवपुः ।
कपाले दीप्राग्नौ स्फुटदिति विभिन्ने किल तदा मुदा ब्रह्मद्वारादविशदपुनर्जन्मभवनम् ॥ २१ ॥

॥ इति श्रीगजसुकुमालकथा ॥२१॥

हरिचक्रिणोर्वा । मुर्वंसे यं यरवर्णिनि ! त्वं तत्कण्ठपीठे वरदाम धेहि ॥ ३९ ॥ नलस्य भैमी गलकन्दलेऽथ न्यास्थत् प्रमोदाद् वरदाम सद्यः । अग्रे गुरूणां त्रपया स्वबाहुगाढोपगूढप्रतिहस्तकोहम् ॥ ४० ॥ तदा व्यजृम्भन्त च साधु साधु वृतं विदर्भाङ्गभुवेति वाचः । वद्धक्रुधोऽपि क्षितिपा नलेऽन्येऽशाम्यंश्च तस्याः सुकृतप्रभावात् ॥ ४१ ॥ अथाशु भीमेन महीभुजस्ते सम्मान्य सम्मान्य महोपदाभिः । निजार्थसंसिद्धिमता विसृष्टाः स्वमण्डलाद् मन्त्रविदेव चेष्टाः ॥४२॥ ततः शुभेऽह्नि स्मरमीशदग्धमुज्जीवयन्तीषु वधूषु गीत्या । कलत्रातिहृष्टोत्सवतः स्वपुत्रीमुद्वाहयामास नलेन भीमः ॥ ४३ ॥ नलाय तेजोविजितानलाय भीमः स्वपुत्रीकरमोचनेऽथ । ददौ सदौचित्यविदेष हस्तिहयादिहेमादिकमात्मशक्त्या ॥ ४४ ॥ तौ कङ्कणोद्भासिकरौ कुलार्यागीतौ गृहे चैत्यमवन्दिषाताम् । ततश्च भीमो निषधश्च भूपौ तत्कङ्कणोच्छोटनमाचरेताम् ॥ ४५ ॥ अथ प्रयान्तं निषधं सपुत्रमपि स्वदेशाय विदर्भराजः । अनुप्रयातो विधिवद् निवृत्स्यन् कृतप्रणामामशिषत् स्वपुत्रीम् ॥ ४६ ॥ वत्सेऽनुशास्तिस्त्वयि पूष्णि दीपस्तथापि मोहाद् कियदादिशामि । त्याक्षीर्नलं मा व्यसनेऽपि यस्मात् कुलाङ्गनानां पतिरेव देवः ॥ ४७ ॥

भीमेऽनुशास्येति सुतां निवृत्तेऽधिरोप्य तामात्मरथं नलोऽपि । चचाल सेनाश्वखुरक्षतक्ष्मारजोभिराशास्तिरयन् दशापि ॥ ४८ ॥ ततः स्वपुर्यां निषधाधिपस्य यातोऽन्तराऽस्तं तरणिः प्रपेदे । ब्रह्माण्डभाण्डं परितोऽप्यपूरि नीलीरसेनेव च तामसेन ॥ ४९ ॥ तथापि नासौ गमनाद् व्यरंसीद् बलीयसी हि स्वभुवो दिदृक्षा । निजाङ्कपल्यङ्कतले शयाना नलेन भैमीति ततो बभाषे ॥ ५० ॥ देवि ! प्रबुध्यस्व बलं न यातुमीष्टे बतान्धंकरणैस्तमोभिः । प्रकाशय स्वं तिलकं तदुच्चैः सहस्रभानोर्युवराजकल्पम् ॥ ५१ ॥ देव्या ललाटं परिमृज्य फलते तमःप्रतीपे तिलकप्रदीपे । ततोऽचलत् तस्य चमूस्तमिस्रामध्येऽपि सा चक्रिरूथिनीव ॥ ५२ ॥ नलो महात्मा तमलोकताथ मुनीन्द्रमेकं

प्रतिमाद्यगमये । धनैर्भव्याहितदाननेपथ्यैर्जिः सहस्राक्षमिव द्विरेफैः ॥ ५३ ॥ भक्त्या सभार्योऽपि नलोऽवतीर्य रथादथामुं मुनिमाननाम ।
ध्यानात् निरस्तैरिव कर्मचौरैर्व्याप्यमानं भ्रमरै रथाङ्गिः ॥ ५४ ॥ ततः पुनस्तद्गुणकीर्तनेन निरुत्तपापः सपरिग्रहोऽपि । रथं समारुह्य
महारयोऽमात्यपरीतसैन्यः स्वपुरीमियाय ॥ ५५ ॥ निवेश्य तस्यामथ कोशलायां पुरस्कृतोऽसौ निषधेन पित्रा । भैम्या समं स्वं पुरभा-
मिनीभिः व्याख्यापयन् पूर्वभवेष धन्यः ॥ ५६ ॥ नलं तथा कूबरमात्मपुत्रं निवेश्य राज्येऽपि च यौवराज्ये । निषिद्धकल्को निषधः क्रमेण
नभिरुपाद्याम्बुधिचचार ॥ ५७ ॥ ततोऽभ्रंलिहगोपुरशालमानविशालवैजयन्तशालाम् । पयोधिलेखापरिखां सुखेन नलः शशासैकपुरी-
मिवोर्वीम् ॥ ५८ ॥ येनाजिभूमौ नृपकुञ्जरेण धनुर्लतायाः करकम्पितायाः । शिलीमुखैराशुगतिप्रयातैर्वंशा व्यकीर्यन्त महीधराणाम् ॥ ५९ ॥
स कूबरः स्वप्रमादरजतः सुरालज द्यूतपथे निनाय । भैम्या निषिद्धोऽपि हि नैषधिस्तन्नैव व्यरंसीदिह शीर्णबुद्धिः ॥ ६० ॥ मोहाकुलः
दैव गतः कलेन प्रतीक्ष्यमाणः सह कूबरेण । अहारयत् प्राज्यमपीह राज्यमहो ! विधातुर्विषमं चरित्रम् ॥ ६१ ॥ कालेन साक्षादिव कूब-
रेण वसूनि सर्वाण्यपनीय मुक्तः । नलोऽथ शीतांशुरिवैक एव कन्दस्सु पतितप्रिय नागरेषु ॥ ६२ ॥ देशान्तरं याति नलेऽथ भैमीं छाया-
मिवास्यानुसरं प्रयान्तीं । नलानुजः प्राह मृगाक्षि ! मा गा नलेन यस्मादसि हारिता त्वम् ॥ ६३ ॥ यदन्विदं सोऽभिदधे प्रधानैः किं
कूबर ! दुर्मते ! करोषि । यद् भ्रातृजाया जननीव मान्याऽस्याः शापतो वा भवितासि भस्म ॥ ६४ ॥ तैरेवमुक्तः स जवेन भैमीं रथे
निवेश्यानुगतं व्यसृजत् । नलोऽप्यथ त्यक्तरथः सभार्यश्चचाल पादैः पृथिवीं पुनानः ॥ ६५ ॥ हा हा हताः स्मो हतचेष्टसेति विलापिनीनां
परितः प्रजानाम् । पौराम्बुभिस्तन्निगमस्तदानीमाजानुजम्बालसमाकुलोऽभूत् ॥ ६६ ॥ पुरोपकण्ठेऽथ नलानुयातानमात्यपौरप्रभृतीन्
विसृज्य । एको पुरस्थल च सङ्गमेन भैम्याऽनुयातोऽभि वन प्रतस्थे ॥ ६७ ॥ मार्गः सदर्भो मसृण प्रयाहि घर्मः कठोरश्च शिरः पिधेहि ।

भैमीति साधुः पथिकाङ्गनाभिः मा शिक्षिता वर्त्मनि वीक्षिता च ॥ ६८ ॥ अशिश्वयत् पद्मपीप्यदम्भो व्यशिश्रमत् प्रीतिकलो नलोऽपि । दत्वा च बाहुं यत मन्दमन्दमचीचलच्चञ्चललोचनां ताम् ॥६९॥ उपेयतुस्तावटवीमथैकामेकान्तभीमां तरुमालिकाभिः । आगोत्रजन्मावधि-तेन्दुसूर्यः पाताजयासीन्न जनो यदीयः ॥ ७० ॥ विनीतवाक् तत्र विदर्भपुत्री नलं निपत्य क्रमयोरवादीत् । प्रसीद संपादय नाथ ! पादन्यासेन मत्तातपुरं पवित्रम् ॥ ७१ ॥ नलोऽथ तामाह यदात्थ देवि ! करिष्यते श्वस्तनवासरे तत् । सापि प्रियेण प्रतिपन्नमेतद् निशम्य सम्यग् हृदि पिप्रिये च ॥७२॥ इहान्तरे ग्यस्तसमस्तवैभवो नयोदिते राजनि सज्जलाञ्छने । नलो यथा भीमभुवा दिनश्रिया श्रितोऽभि देशान्तरमंशुमानगात् ॥७३॥

तमो नीलीनीलं यदशितमनेनाङ्गमितस्तदन्तःस्थं काचात्मक इव करीरः प्रकटयन् ।
ततोऽंशुप्रस्तारैर्नलसहचरीशीलविशदैर्दिशश्चक्रे चन्द्रः समदकुमुदामोदमुदिताः ॥ ७४ ॥

॥ इति दवदन्तीजजितनामनि महाकाव्ये प्रथमः सर्गः ॥

---

अथोत्तरीयमाधाय पल्यङ्कं पार्थिवाग्रणीः । भुजोपधानमेवाप स्वापमङ्गनया सह ॥१॥ निशीथे पृथिवीनाथो निद्रास्पृशि मृगीदृशि । अचिन्तयचिरं चित्ते नियत्या निहतोद्यमः ॥२॥ आकारयिष्यति प्रातः प्रिया निजपितुर्गृहे । अथन्ते श्वशुरं नीचास्तत् क्व यामि करोमि किम् ? ॥ ३ ॥ ऽद्यः करिष्यामि यद् देवि ! यत्तासीति प्रतिश्रुतम् । वाक्यं दाक्षिण्यसंभूतं तद् मनोऽतिदुनोति मे ॥ ४ ॥ यदि सुप्तां त्यजाम्येतां तद्दिनाऽपैति दुर्यशः । अन्यथा मामियं प्रातः प्रापयत्येव कुण्डिनम् ॥ ५ ॥ स्वशीलरक्षितामेतां चरं मुञ्चामि भामिनीम् । न कुण्डिनीगतो दैन्यमन्दो मन्दात्तमुद्वहे ॥ ६ ॥ निश्चित्येति नलः कान्ताकपोलतलतः करम् । मन्दं चकर्ष निर्यातुमवाञ्छन्तमिव प्रियाम् ॥ ७ ॥ उत्तरीयस्य

वाष्पोर्मिरुद्धदृग्वर्त्मा शुचा गलितचेतनः। वल्कनाय करं व्योम्नि
पर्यङ्कीकृतस्य प्रदर्येच्छया। आचकर्ष ततः शस्त्रीं निस्त्रिंशत्वेन सत्रपः ॥ ८ ॥
न्म्युक्तः व्याकुलो नलः ॥ ९ ॥ तस्य ध्यात्वा क्षणेनाश्रूणी परिमार्ज्यैकपाणिना। चेलं चिकर्त्तिषोः कम्पाद् निपपात क्षुरी करात् ॥ १० ॥
पुनः छराधिकां पाणौ गृहीत्वा दुर्मनायितः। मन्दस्वरं जगौ दुःखोत्सेधरुद्धगलो नलः ॥ ११ ॥ दमयन्त्या वनत्यागे स्वपत्न्या मत्करग्रहात्।
क्षरि निस्त्रिंशपुत्रीयं पपात भुवि धिग् नलम् ॥ १२ ॥ धाराधिरूढविज्ञाने ! सद्धंशे ! स्निग्धवानिधे !। निष्कृपस्य कुकार्येऽपि कृपाणि !
कुरु मे कृपाम् ॥ १३ ॥ इत्युक्त्वा क्षणमुद्धृत्य धैर्यं चेलमलूनतो नलः। चकर्त्त चीवरं प्रेमबन्धनेन समं तदा ॥ १४ ॥ अथ देव्या मुखाम्भो-
जमालोकयितुमुन्मनाः। ममार्ज पाणिना भालमुन्मीलत्तिलकप्रभम् ॥ १५ ॥ अथाध्यायद् नलो मुग्धामुखस्याहो महो महान्। येन जागर्ति
शेते वा नेति निश्चिनुते मतिः ॥ १६ ॥ उवाच देवि ! त्वद्वक्त्रालोके माद्यं न मे दृशोः। नच त्वत्परिचर्यायां योग्यतापि हतात्मनः ॥ १७ ॥
प्रियाननोदरस्पिस्तद्धिरेयं वदन् नलः। दधौ हस्तेन वाष्पाम्भस्तत्प्रबोधभयाद् मुहुः ॥ १८ ॥ अरूपः सरूपे ! गोत्रकलङ्क, कुलदीपिके !।
दुराचारः सदाचारे ! कुर्वे नतिमपश्चिमाम् ॥ १९ ॥ देवि ! त्वच्चरितेनेन्दुरकलङ्कः किलाभवत्। अन्ववायगुरुः किन्तु मद्वृत्तेन कलङ्कितः
॥ २० ॥ अहो ! अभीरुर्वजवान् यद् भीरुमवला नलः। मुक्त्वा वनान्तरे याति स्वयं वसति पत्तने ॥ २१ ॥ ब्रुवन्निति सतस्याङ्कस्फुरत्तल-
जेरया। अक्षराण्यलिखद् दीनो देव्याश्चेलाञ्चले नलः ॥ २२ ॥ विदर्भेषु वटेनाख्या वामे ! वामेन गच्छति। दक्षिणे ! दक्षिणैरेतैः कोश-
लायां तु किंशुकैः ॥ २३ ॥ यत्र ते प्रतिभात्येव तत्र देवि ! स्वयं व्रजेः। आत्मानं दर्शयिष्येऽहमुत्तमे ! न तवाधमः ॥ २४ ॥ लिखित्वेति नलो
मार्गपद्पातमथाचलत्। पिदन् भुजाभुजं देव्या दृग्भ्यां वलितकन्धरः ॥ २५ ॥ रक्षामि शयितां यावद् यामिनीं स्वामिनीमिति। नलः
पश्यन् प्रियां वल्लीमण्डजान्तरितः स्थितः ॥ २६ ॥ विभातायां विभावर्यां देव्या जागरणक्षणे। मृदुद्रुतपदापातमचलद् नलभूपतिः ॥ २७ ॥

अथो हृदयसंतापं स्फुटीभूतमिवात्मनः। नलो व्यलोकयद् दावानलं ज्वलितमग्रतः ॥ २८ ॥ सूर्यवंशनगोत्तंस ! निषधक्ष्मापनन्दन !। महाबल ! नल ! भाग्यदत्त ! सरक्ष मां दवात् ॥ २९ ॥ इत्याकर्ण्य गिरं दावानलमध्ये स्थितां नलः। अचिन्तयदिदं वेत्ति कोऽत्र मां निर्जने वने ? ॥ ३० ॥ अथोवाच नृपः कस्त्वं मां परिज्ञाय भाषसे ?। इत्युक्ते पुनरुद्भूता भारती दावपावकात् ॥ ३१ ॥ भुजगोऽहमदग्धायां वल्लौ संकुचितः स्थितः। निर्गन्तुं भूमितापेन न शक्नोमि दवानलात् ॥ ३२ ॥ उपकारं करिष्यामि महान्तं ते महीपते !। मूर्तादिव यमक्रोधा-द्ग्नेस्तत् कर्ष कर्ष माम् ॥ ३३ ॥ इत्याकर्ण्य विलोक्याथ पटप्रान्तं नृपोऽक्षिपत्। सर्पे तदग्रमारूढे क्षणेन पुनराकृषत् ॥ ३४ ॥ अथ निःसृत्य ययास्य भुजाग्रे भुजगोऽदशत्। तदात्वमेव कुब्जत्वमाससाद ततो नलः ॥ ३५ ॥ दृष्ट्वाऽथ भूप स्वं रूपं दध्यौ दृष्टं मया स्यात्। धिग् देवीत्यागपापद्रुफलोपचितप्रसूनकम् ॥ ३६ ॥ अधुना वनमायान्त्या देव्या यादृक् कृतो मया। उपकारोऽमुना तादृग् दधाक्रुष्टेन मे कृतः ॥ ३७ ॥ तनैजस्य इसन्नाह सरीसृपमथो नृपः। उपकारस्त्वयाऽकारि स्वस्ति ते गम्यतामिति ॥ ३८ ॥ अथ कोऽप्यग्रतो भूत्वा प्रीत-माह नरो नृपम्। वत्स ! जानीहि मां देवीभूतं पितरमात्मनः ॥ ३९ ॥ भास्वन्तं दुर्दिनेऽपि त्वां तेजसा मा स्म शत्रवः। जानन्तु हन्त तेन त्वं मया नीतोऽसि कुब्जताम् ॥ ४० ॥ करण्डकं च बिल्वं चादत्स्वैतत् प्रयत्नोऽंशुके। कुण्डले परिधाय त्वं निजं रूपमिवाप्स्यसि ॥ ४१ ॥ इत्थं समर्पयन्नेव देवः प्राह पुनः सुतम्। क्व भवन्तं निमुञ्चामि पादचारो हि दुःसहः ॥ ४२ ॥ सुंसुमारपुरे मुञ्च नलेनेत्थम-भिहिते। देवः क्वचिद् ययौ स्वं च तत्रापश्यदसौ नृपः ॥ ४३ ॥ अकस्माद् विस्मयस्मेरस्तत्र पश्यन् पुरतः पुरम्। यावच्चलति सोऽश्रौ-षीत् तावत् कलकलं पुरः ॥ ४४ ॥ ततः किमेतदित्यन्तश्चिन्तयत्याकुले नले। नश्यतां नश्यतामित्यमूचुरुच्चैस्तुरङ्गिणः ॥ ४५ ॥ स्पर्धयेव प्रधावन्तीं भ्रमन्तं छायामपि स्वकाम्। मुहुः स्ताररवस्पर्शी वायुनापि भयादिव ॥ ४६ ॥ उदस्तशुण्डमुद्दीनानपि खण्डयितुं खगान्। तयोरिक्ष-

प्यमहादण्डमिव दण्डधरं क्रुधा ॥ ४७ ॥ घर्मंशुघानिवान्दस्य स्वशब्दस्पर्धिनोऽध्वनि । भिन्दन्तं दन्तघातेन पादपांश्च पदे पदे ॥ ४८ ॥
मृणांतिधूननैर्गण्डमंशुनालिङ्गुजच्छलात् । क्षिपन्तं खण्डशः कृत्वा व्योमाङ्गणमपि क्षणात् ॥ ४९ ॥ क्वचित् कुञ्चितभूखण्डमुद्दण्डगति-
दम्भरैः । व्यालं विलोकयामास नलः प्रबलविक्रमम् ॥ ५० ॥ पञ्चभिः कुलकम् ॥ ऊर्ध्वीकृत्य भुजामुर्वीभुजा वाहुयुजा ततः । व्याहृतं
रुधिरोग्रेण दशव्याकुलचेतसा ॥ ५१ ॥ यः कोऽपि कोपिनममुं करिणं कुरुते वशे । लक्ष्मीं तनोमि तद्गेहाङ्गणरङ्गकनर्तकीम् ॥ ५२ ॥
समाकर्ण्येति गुमुकात् सादरं प्राचलद् नलः । कालप्रायमपि व्यालं मन्यमानः शृगालवत् ॥ ५३ ॥ भो कुब्ज कुब्ज ! कीनाशमुखे मा
विश मा विश । इत्युक्तोऽपि जनैर्धीरः केशरीव ययौ गजम् ॥५४॥ रे रे शुण्डाल ! मा बालविप्रधेनुवधूर्वधीः । पद्मेहि मदहुर्दान्त ! दान्ततां
दर्शयामि ते ॥ ५५ ॥ चलन्तमिति वाचालं कोपादनुचचाल तम् । करी कराग्रविक्षेपप्राप्ता (प्रा ?) प्तशिरोरुहम् ॥ ५६ ॥ पतन्नुद्यन् मिलन्
नश्यन् निघ्नन् घातं च वञ्चयन् । अङ्गुष्ठाङ्गुलिसंमर्दैरर्दयन् पुष्करं छलात् ॥ ५७ ॥ भ्रान्त्वा दक्षिणपक्षेण चक्रवद् भ्रामयन् मुहुः ।
चतुर्णामपि पादानां प्रविश्याधो विनिःसरन् ॥५८॥ निमेषार्धात् पुरः पश्चात् पतयोश्च स्फुरन् नलः । खेदयामासिवानेकोऽप्यनेकवदने-
भम् ॥५९॥ विशेषकम् ॥ सोऽथ खिन्नमपि क्रोधाद् धावन्तं द्विपमुन्मदम् । वशीकर्तुं पटीं मूर्त्तामिव प्रज्ञां पुरोऽक्षिपत् ॥६०॥ रूपबु-
द्ध्याऽथ तां हन्तुं विलसन्तं मतङ्गजम् । दन्तन्यस्तपदः शैले केशरीवारुरोह सः ॥ ६१ ॥ कलापकान्तरन्यस्तपदस्तदनु दन्तिनम् ।
सृणिमादाय रोमाञ्चकवची तमवीवलत् ॥ ६२ ॥ पुरस्य कृपया कोऽपि किमसावाययौ सुरः । स्वयम्भूरथवा पौरपुण्यपूरैरसावभूत् ॥ ६३ ॥
अभ्रमूवल्लभस्पर्धिवर्धितद्विपराक्रमः । ययौ भुवनभीमोऽपि गजोऽयं यस्य वश्यताम् ॥६४॥ इत्थं परस्परं पौरैः प्रीतिगौरैः पदे पदे ।
कुब्जोऽपि स्तूयमानश्च वीक्ष्यमाणश्च रेजिवान् ॥ ६५ ॥ त्रिशेषकम् ॥ प्रजात्मा स्वयमारुह्य गोपुरं पुरनायकः । तस्याधो गच्छतः कण्ठे

दाम रत्नमयं न्यधात् ॥६६॥ अथोपनीय शालायां गजमाकलयन्नलः। लीलाविलोलशुण्डाग्रग्राहिताहारपिण्डकम् ॥ ६७ ॥ प्रीतः प्रदाय रत्नानि वसनाभरणानि च। अथ मित्रगिरोर्वीशः पुरः कुब्जं न्यवीविशत् ॥ ६८ ॥ कुतस्तव कलाभ्यासः कस्त्वं वससि कुत्र च। पृष्टो राज्ञेति छद्मेन नलभूपतिरभ्यधात् ॥ ६९ ॥ सूपकारो नलस्याहं प्रियो हुण्डिकसंज्ञकः। [शिक्षितास्तत्समीपे च कलाः कतिपया मया ॥ ७० ॥ नलो भ्रात्रा कूबरेण जितो द्यूतेऽखिलां महिम्। दवदन्तीमुपादाय प्रपेदेऽरण्यवासिताम् ॥ ७१ ॥ सभार्यः स मृतस्तत्र ततोऽहं त्वामुपागमम्। मायानिलमपापर्कं स्थितोऽस्मि न तु कूबरम् ॥७२॥ ?] इति श्रुत्वा नलक्ष्मापवार्तामार्त्तारवोऽरुदत्। दधिपर्णोऽश्रुकच्छ-पत्रदनः सपरिच्छदः ॥ ७३ ॥ कृत्वा नलस्य पर्यन्तकृत्यानि कृतिनां वरः। अधारयच्चिरं चित्ते दधिपर्णनृपः शुचम् ॥ ७४ ॥ रस-वत्या नलः सूर्यपाकया नृपमन्यदा। अप्रीणयद् यथायुकरसप्रसरपुष्टया ॥ ७५ ॥ अथ वासांसि रत्नानि तस्मै भूरीणि भूपतिः। ग्रामपञ्च-शतीं टङ्कलक्षं च नृपतिर्ददौ ॥ ७६ ॥ राज्यं ययौ नलस्यापि ग्रामैर्नाम करोमि किम्?। तं कुब्जमिति जल्पन्तं प्रीतः प्राह पुनर्नृपः ॥७७॥ प्रीतोऽस्मि तव सत्येन सत्त्वाधिकशिरोमणे।। याच्यतां यचितं किञ्चिदित्युक्तेऽभिदधे नलः ॥ ७८ ॥ मृगव्यमदिराद्यूतव्यसनानि तव सीमनि। यावज्जीवं निषेध्यानि, श्रुत्वेदं तद् व्यधाद् नृपः ॥ ७९ ॥

दधिपर्णमहीभुजा नलः कृतसौहार्दसुशीतलो बहिः। चिरमस्थित भीमनन्दिनीविरहाग्निज्वलितोऽन्तरा पुनः ॥ ८० ॥

॥ इति दमयन्तीजलितनामनि महाकाव्ये द्वितीयः सर्गः ॥

प्रयागतः संसदि सुकुमारभूपं द्विजन्मेति जगाद कश्चन । उपेतभैमीवचसा ससर्ज मां विदर्भराजो नलशुद्धये त्वयि ॥ १ ॥ विदर्भजा जीवति यत्किलोत्तमा नलोऽपि तज्जीवति निश्चजीवितम् । इति प्रमोदाद् दधिपर्णपार्थिवस्तमाह विप्रं स्मितबन्धुराधरः ॥ २ ॥ ममैव राज्ये नलसूपदद् गुणी किलास्ति कुब्जोऽस्य गिरा मया श्रुतम् । कनीयसा हारितवैभवो नलः प्रियान्वितो यद् विपिने व्यपद्यत ॥ ३ ॥ तवैनया तु श्रवसोः सुधाकिरा गिरा द्विजाते ! मुदितोऽस्मि तद् वद । कथं वियोगोऽभवदेतयोः पितुर्गृहे कथं वा दवदन्त्युपाययौ ? ॥ ४ ॥ अथाह विप्रः शृणु देव ! नैषधिर्वनं प्रपेदे सह कान्तया तया । निशि प्रसुप्तां च विमुच्य तामयं कुतोऽपि दैवोपहतः प्रयातवान् ॥ ५ ॥ निशावसानेऽथ कृशोदरी तु सा सतथमा स्वप्नमिमं निरैक्षत । रसालमारोहमलादिदं फलान्यतोऽपतं व्यालविलोडिताच्च यत् ॥ ६ ॥ ततो प्रबुद्धा मृगेक्षणा क्षणादवीक्ष्य कान्तं निधुरेत्यचिन्तयत् । इतः प्रियो देवतया कयापि मे विभातकृत्याय गतः स्वयं स वा ॥ ७ ॥ स्थितोऽथवा नर्मकृते कुतोऽप्यमुं गवेषयामीति ययौ यतो यतः । ततस्ततोऽप्यप्रसमीक्ष्य सा नलं विलक्षभावेन भृशं व्यकूयत ॥ ८ ॥ स्व गच्छन्ती निरगाच्च पांसुलास्वाश्रितान् वीक्ष्य मृगान् मृगेक्षणा । पतिश्रमेणाप्रमुजानिगामिनी मुमोह तन्निश्चयतो रुरोद च ॥ ९ ॥ उवाच चाऽऽत्तु दवदन्त्यपादय प्रिय निपत्योहि तु देहि दर्शनम् । न शर्म नर्माप्यतिनिर्मितं करोत्यतिर्हि सर्वत्र जनेन गर्ह्यते ॥ १० ॥ इति प्रतिस्वानमिव नलप्रिया निजोदितस्यैव निशम्य हर्षिता । प्रियो नु मामाह्वयतीति सत्वरक्रमा जगामाद्रिगुहाद्रिगह्वरम् ॥ ११ ॥ तत्राप्यनालोक्य पतिं निशात्यये निजेक्षितं स्वप्नमियं व्यचारयत् । नले रसाले फलवृद्धिमाप्नवं ततोऽस्मि दैवेभविलोडिता च्युता ॥ १२ ॥ तदर्थतः स्वप्ननिवेदितादतः सुदुर्लभो वल्लभसंगमो मम । इति प्रधार्य प्रवदत्यगानपि व्यरोदयद् वज्रहृदोऽप्यदारयत् ॥ १३ ॥ धिगत्र मामाश्रितवत्सलोऽपि यां मुमोच तादृग् दयितो दयानिधिः । मनस्विनं नेतुममुं पितुर्गृहे कदाग्रहं ह्यो मम तं च धिग् हहा ! ॥ १४ ॥ प्रगन्तुकामः

श्वशुरस्य मन्दिरे ममाग्रहं मानधनोऽवधार्य स । मुमोच मां प्राणसमामपि त्यजन्त्यसून् न मानं हि मनस्विनः क्वचित् ॥ १५ ॥ हहा महासत्त्व ! महामते ! महायशोनिधे ! कान्त ! महात्तमाम्बुधे ! । स्वदासिकायाः कथमेक एव नाजन्मापराधोऽयमसह्यत त्वया ? ॥ १६ ॥ कदाप्यभूवं हृदयेश ! दूरतः सितासितादेशगिरामहं तव । यदुज्झिता भाद्रपदस्य गोमयं यथा निषिद्धा न कदाग्रहात् ततः ? ॥ १७ ॥ मयाऽथवा ज्ञातमिदं भवान् व्यधाद् ममान्यथा न स्ववचनापि भाषितम् । ततोऽहमस्मि त्वयकोज्झितेह वाऽवमानना तो न कृता विमानिता ॥ १८ ॥ ममेदृशी दैव ! कथं कदाग्रहे कृता नलस्येव दुरोदरे मतिः ? । विलापिनीति प्रसभं पपात सा वियुक्तवृत्ता लतिकेव मूर्च्छिता ॥ १९ ॥ अथोज्झिता शङ्कितयेव मूर्च्छया प्रयाहि मा नायक नायकेतिवाक् । वियोगवैक्लव्यवती रुरोद साऽनुरोदयन्ती वनदेवता अपि ॥ २० ॥ नलप्रियाया अनलस्य मित्रमभ्युदस्य वासः कृपयेव मारुतः । अदीदृशत् तां सुदृशोऽक्षरावलीं विलोक्य सापि प्रियवद् दधे हृदि ॥ २१ ॥ अचिन्तयच्च प्रमदादसावहो ! विधेऽहमद्यापि नलस्य चेतसि । यदादिशद् मे पितृवेश्मवर्तनीमिमैर्निजाखुग्लिपितैरिहाक्षरैः ॥ २२ ॥ सह प्रियेणापि यियासितं पितुर्गृहं प्रयास्यामि विशेषतोऽधुना । कुलाङ्गनानां हि शिवाय पालितं भवेदिहामुत्र च भर्तृशासनम् ॥ २३ ॥ इयं विचिन्त्येति वटाध्वनाऽचलद् निजांह्रिवीङ्खाध्वनितेऽपि बिभ्यती । भुवः सपत्न्या अपि सूनुषु स्थितिं वितन्वती स्निग्धतरेषु शाखिषु ॥ २४ ॥ मृगद्विषोऽस्याः सुजलामरीधितेर्धगद्वाग्नेरिव दूरतोऽभवन् । उपाद्रवंश्चापि घनेचरा न तां परामयन् कनापि न कौणपा अपि ॥ २५ ॥

अथैक्षतासौ पुरतो निवासितं सुसार्थमेकं शकटालिमालितम् । अनेन साकं गहनस्य गंस्यते मयाऽन्तमित्यन्तरधत्त नोद्यमम् ॥ २६ ॥ जगाम तं यावदियं महासती मलिम्लुचैस्तावदसावरुध्यत । स्वशीलसत्यापनयाऽनया पुनर्निराकृतास्ते त्रिभिराशु हुङ्कृतैः ॥ २७ ॥

ततोऽथ कोऽपि प्रसरन्मार्थभृद् ननाम देवीं भुजदेवतामिव। तुष्टाथ कोशीकृतहस्तपङ्कजोऽपृच्छच्च काऽसि त्वममोघदर्शने ! ॥ २८ ॥
प्रभाष्य सर्वं निजदुःखसंचिदं विदारयन्ती हृदयं जगाद सा। अनीयतानेन च भक्तितो निजं गुरु दरं सद्गुरुवच्च पूजिता ॥ २९ ॥ नल-
पुरं स्थितायामिह तत्र पथतारलोनचोजीभवदम्बुदावलिः। घनागमोऽजायत वारिवृष्टिभिर्नितान्तमोजायितवल्लरीवन. ॥ ३० ॥ नल-
प्रिया पङ्किजतः किलापुरो निःसृत्य सार्थादथ शुद्धभूमये। पथि प्रयाती पजलादमग्रतो ददर्श पाथोदमिव च्युतं दिवः ॥ ३१ ॥ तामाह
गर्जन्नयमरिषमूत्पायजीवलाको रसनातडिल्लतः। स्थिरीभव त्वं मृदुलाङ्गि ! मेऽशनं जातासि राहोरिव चैधवी कला ॥ ३२ ॥ उवाच
भैमी भयवर्जिताथ तं विरूपमस्मिन् विषये किमस्ति भोः !। विनाशिनाऽमेध्यमयेन साध्यते परोपकारो यदि धर्मणाऽमुना ? ॥ ३३ ॥
ततः स तामाह तयामुना शुभे ! तुष्टोऽस्मि सत्त्वेन वृणीष्व तद् वरम् । तुष्टोऽसि चेत् तद् वद मे नलः कदा मिलिष्यतीत्येनमपीयम-
प्राक्षीत् ॥ ३४ ॥ दिनाद्वितो द्वादश एव वत्सरे तयोपनेता मिलिता पितुर्गृहे। तस्यै निवेद्यावधिनेति तद्गिरा तिरोदधेऽकारणको-
पनः सुरः ॥ ३५ ॥

प्रथाददे भीमसुतेत्यभिग्रहान् न मेऽत्र यावद् भवितेष्टसंगमः। तावद् न भोक्ष्ये विकृतीर्न धारये वासो न ताम्बूलमहं कदाचन
॥ ३६ ॥ ततोऽगिगृह्येति नगस्य कस्यचिद् गुहागृहे सिंहवधूरिवास्थित। अर्चामिमां शान्तजिनस्य मृण्मयीं कृत्वार्चयन्ती गलितैः स्वयं
द्रुमैः ॥ ३७ ॥ इयं चतुर्थादितपांसि तन्वती सतीवरेण्या विततान पारणाम्। शुकादिनिष्कोषितबीजसंपुटैर्वनस्पतीनां पतितैः स्वयं
फलैः ॥ ३८ ॥ इतश्च तां सार्थपतिः समन्ततोऽन्विष्यन् वसन्तोऽनुपदं समागतः। दृष्ट्वाऽर्चयन्तीं जिनमानमद् मुदाऽपृच्छच्च हे अम्ब !
क एष देवता ? ॥ ३९ ॥ विदर्भजाऽस्मै निजगाद षोडशः श्रीशान्तिनामैष जिनोऽर्च्यते मया। समस्तदुःखार्णवपारगामिनी यदर्चनेच्छा-

पि सुकुंजभाऽङ्गिनाम् ॥ ४० ॥ श्रुताधिदेव्यामिव धर्ममार्हतं ततो दिशन्त्यामिह तस्य वोधये। उपेत्य साश्चर्यमुपान्तवासिनस्तपस्विनोऽ
पि न्यपदन् मृगा इव ॥ ४१ ॥ इमां गुरूकृत्य तपस्विभिः समं सुश्रावकोऽभूदथ सार्थपार्थिव'। समाख्यया तत्र च तापसादियुक्पुर
तदास्याश्रितये चकार स ॥ ४२ ॥ तदन्तर तेन च भीमनन्दिनीनिदेशतः शान्तिजिनेन्द्रमन्दिरम्। अकारि यत्केतुमिषादलम्बयत् प्रमा·
यपत्रं कुजपर्वतेऽजपि ॥ ४३ ॥ हृष्ट्वा सुरानापततोऽन्यदा नगे समं समस्तैर्नलकान्तया तया। अयायि तत्रैक्षि च सिंहकेशरी तदात्वनु·
न्मीलितकेवलो मुनिः ॥ ४४ ॥ प्रणम्य तं केवलिन सुरार्चितं पुरोऽस्य देवी निषसाद सादरम्। तदाप्युपेतो मुनिरप्युपाविशत् कश्चित्
परीवारयुतः परीय तम् ॥ ४५ ॥ केवल्यथो निर्मितधर्मदेशनोऽप्यधाद् प्रतीयन्तमिमं तपस्विनम्। भोः! कूवरोऽस्या' सुहृशोऽस्ति
देवरस्तस्याङ्गजोऽहं किल सिंहकेशरी ॥ ४६ ॥ सङ्गापुरीन्द्रस्य विवाह्य नन्दनीं मया निवृत्तेन निजायुरस्थानि। पृष्टो यशोभद्रगुरुर्न्यवेद·
यद् दिनानि पञ्चैव तवायुरित्ययम् ॥ ४७ ॥ ततो निशम्येति विरागवानहं व्रत गृहीत्वाऽकरवं तपस्तथा। यथोदयौ केवलमद्य मे शिवं
मतं तु ते सूरिरयं प्रदास्यति ॥ ४८ ॥ इदं गदित्वा शिवमाप केवली शिवोत्सव चास्य सुरा वितेनिरे। तपस्विमुख्य· सपरिच्छदश्च स·
मतं यशोभद्रगुरोरुपाददे ॥ ४९ ॥ देवी तु सार्थेशगुरुस्कृता पुरे भ्रान्तयंशोभद्रगुरुन् व्यजीहरत्। शान्तिप्रपत्तज्जिनराजमन्दिरं स्वयं च सा
म्यक्त्वमुपाददे सा ॥ ५० ॥ तत्र स्थितायां इति सप्तवत्सरीं नलप्रियायाः पुर पत्य कश्चन। आचष्ट तुभ्य पथि तिष्ठते नलो यास्यामि सा·
र्थो यदयं प्रयाति मे ॥ ५१ । अथाशु नि सृत्य च साऽन्वधावत प्रियो मम क्वेति रुवं वितन्वती। पपात चैषा गहने पिशाचिकामेकां पुर·
स्ताद् विकृतां ददर्श च ॥ ५२ ॥ इयं च तामाह कपालमेकत करे दधानां परतश्च कर्त्तरीम्। मयाऽसिकृष्णाऽशितुमद्य जीवितेश्वरान्तिक
र्यां गमयामि मा मज ॥ ५३ ॥ अनाकुला देव्यथ विघ्नशान्तये सस्मार शान्ते· परमेशितु· क्रमान्। तत पिशाच्याऽपहृत हताशया त

निमदेशोद्गतो विनश्यत ॥ ५४ ॥ ततः कुतश्चिद् धनदेवसज्ञित कुत्रापि यान् सार्थपतिः पितेव ताम्। नीत्वा मुमोचाचलपत्तने तृपातुरा नु सा कामपि वापिकां ययौ । ५५ ॥ दिवापि तामिन्दुमुखीं चकोरीकाजिजिहमानास्यदिशामिहागता । विलोक्य याता क्षुतुपधूपसेनैवेलिकायै न्यायदन् महत्तिजकाः ॥ ५६ ॥ सा पुष्पदन्ती भगिनी कनीयसी समाख्यया चन्द्रयशास्तदेव ताम् । ताभिः समानाय्य जगाद मद्भुपसुतं चन्द्रमत्याः सदृशासि कासि तत् ? ॥ ५७ ॥ तां मातृजामिं दमयन्त्यपि स्वकामविन्दती प्राह कुलादिगोपनात् । वणिग्वधूत्वाऽह गजितास्मि सार्थतः पत्या वियुक्ता च निशीव कोकिका ॥५८॥ अथाह तां चन्द्रयशा विषीद मा तिष्ठात्र नन्दन्त्यपरेव मेऽसि यत्। इतीरिता साऽस्थित सुस्थिता नजग्रहत्तयेऽस्याः किज सत्रमन्दिरे ॥ ५९ ॥ तत्रैकदा तां शरणं प्रपन्नयान् मां रक्ष देवीति वदन् मलिम्लुच । तानुजये वेपमुवाच रक्षितास्ते चामुचंस्तं न भयाद् महीपतेः ॥ ६० ॥ अथ त्रिरम्भश्चुलुकाभिषेकतो बिभेद बन्धानिह शृङ्खलानिव । ततः प्रभावात्त्र जनो विसिस्मिये नृपोऽपि तामेत्य जगाद संमदी ॥ ६१ ॥ पुत्रि ! त्वयाचन्द्रयशोविभूषणास्तेयापराधी किमसावमुच्यत ? । साप्याह चौरोऽपि मृ(?)येत नो पितर्दशो विशिष्टाहंतया(?) मया खलु ॥ ६२ ॥ तस्याः स्वपुत्र्या इव ताडशाग्रहाद् मुमोच भूमानपि तं मलिम्लुचम् । देव्या न सेवानिरतोऽयमन्यह पृष्टोऽन्यदेति स्वकथामचीकथत् ॥ ६३ ॥ दासोऽस्म्यहं तापसपत्तनप्रभोर्वसन्तनाम्नः फिल पिङ्गलाभिध । तद्द्रव्यमादाय निशि प्रणश्यन् विलुण्ठितोऽन्यैरिह भूपमागमम् ॥ ६४ ॥ इहापि चौर्यव्यसनप्रभावतो बद्धस्त्वयाऽमोचयिषि त्वजीजया । अन्यच्च मातस्तव निर्गमे तदा स सार्थवाहस्त्यजति स्म भोजनम् ॥ ६५ ॥ असौ यशोभद्रगुरुप्रबोधितः कथञ्चनाऽश्नादथ सप्तमेऽहनि । सोपायनः कूबरपार्थिव ततः कृतश्च राट् तापसपत्तनेऽमुना ॥ ६६ ॥ श्रुत्वेति साऽस्याऽदित पारितोषिके महाव्रतेच्छां जिनधर्मदेशनात् । मतं तदादेशवशादसावपि प्रपद्य तेपे गुरुसंनिधौ तपः ॥ ६७ ॥

मथायमौ कुण्डिनतोऽत्र सम्प्रुतस्तत्र द्विजन्मा हरिमित्रसंज्ञितः । स वीक्ष्य वेगादतुपर्णपार्थिवं विनिद्रवाक् चन्द्रयशोऽन्तिकं गतः ॥ ६८॥ पप्रच्छ तं चन्द्रयशा भृशायितप्रमोदभाक् क्षेममसावचीकथत् । ऊचे च जानीथ विदर्भजानलप्रवृत्तिमस्यै समुपागतोऽस्मि यत् ॥६९॥ श्रुत्वेति तस्माद् नलभीमजावनप्रवासवार्तामियमार्तमानसा । करोद सर्वानुचरीवृता तथा यथा किलारोदि गृहाण्डजैरपि ॥७०॥ तथाकुले राजकुले ऽथ स द्विजः क्षुधातुरः सत्रमियाय जेमितुम् । दृष्ट्वाथ भैमीं मुदितः प्रणम्य तामागत्य राज्ञ्यै त्वरितं न्यवेदयत् ॥७१॥ कर्णामृतं सापि निशम्य तत्तथा तस्मै प्रदायाभरणानि भूरिशः । क्व सा क्व सेति प्रवदन्त्युपाययौ पद्भ्यां प्रमोदाद् निजसत्रसद्मनि ॥७२॥ गृह्णामि दुःखं तव पुत्रि ! वञ्चिताऽस्म्यहं त्वया किं निजनामगोपनात् ? । मातृष्वसा मातुरपि प्रशस्यते जने त्वयैतद् वितथं व्यधायि च ॥ ७३ ॥ इति ब्रुवाणा परिरभ्य संभ्रमादाघ्राय मौलौ शिविकां निवेश्य च । निनाय तां चन्द्रयशा गृहे मुदा विभूष्य च घोषिपतेरदोहयत् ॥ ७४ ॥ प्रणम्य तं तातमिवोपविष्टया तत्पृष्टयाऽऽख्यायि कथा तयात्मनः । तदा स्ववंशस्य नलस्य धिक्कृतिं श्रुत्वेव नार्कः प्रययौ रसातलम् ॥ ७५ ॥ विभापि तस्मिंस्तमसि प्रसर्पति स्वमातृजामेर्वचसा विदर्भजा । प्रमृज्य भालं तिलकं तमोऽन्तकं व्यकाशयत् तेन नृपो विसिष्मिये ॥७६॥ इहान्तरे कोऽपि सुरः समेत्य तां प्रणम्य बद्धाञ्जलिरेवमूचिवान् । यस्तस्करोऽग्राहात संयमं त्वया स हंसगामिन्यहमस्मि पिङ्गलः ॥ ७७ ॥ उक्त्वेति कोटीः कनकस्य सप्त स प्रवृष्य देवस्त्रिदिवाय यातवान् । नृपोऽपि राज्या स तया समं तदा हृष्टैनि दृष्टान्तमजायताऽर्हतः ॥७८॥ अथो नृपः सैन्यभरेण भीमजामधाय भेत्ता प्रजिघाय कुण्डिनम् । तातकया द्विजन्मना प्रमोदतोऽस्याः पितरावभीयतुः ॥ ७९ ॥ विलोक्य सास्रे पितरौ स्ववाहनादुत्तीर्य सास्रौ रुदतो नमोऽकरोत् । समस्तजांकैन नतौ च ताविमौ प्रवेशयामासतुरुत्सवात् पुरे ॥८०॥ सपूत्कताम्भःसममश्रुपर्ययां ज्वलद्वियोगानलतो विनिर्गती । भैमीति

रिपोः स्वकथानकीकयद् मया श्रुतेयं च तयोदिता पुरः ॥ ८१ ॥ दूतस्त्विदानीं तव कोऽपि कुण्डिनेश्वरं अगौ यद् दधिपर्णसंनिधौ ममागि कुब्जो नलसूपकृद् सुखी स सूर्यतः पाचयते यथा नलः ॥ ८२ ॥

श्रुत्वेदं दवदन्तुयाच मुदिता यत्तात ! आमावृतो नान्यः कोऽपि च सूर्यपाकरसवत्याम्नायवेदी खलु ।

तत्रायेति नृपोऽपि वीक्षितुममुं तत्संनिधौ प्रेषयद् मामाः कुब्जक एव कुत्र स नलः कन्दर्परूपः क्व च ? ॥ ८३ ॥

॥ इति दवदन्तीनलजितनाम्नि महाकाव्ये तृतीयः सर्गः ।



नृपाय दधिपर्णोऽयमिति विस्तरतः कथाम् । श्रुतां कुब्जेन सारेण यथोक्तरसनादिना ॥ १ ॥ शरीराभरणास्तोमदानेनानन्द्य सगदी । प्रेषीत् स प्रालयं राजा कुब्जस्तु जगृहे गृहे ॥ २ ॥ अभोजयत् स कुब्जेन रसवत्याऽर्कपाकया । स्वर्णादिकं नृपात्लब्ध्वा दत्त्वा प्रीतिं न लम्भितः ॥ ३ ॥ अथायं कुब्जमापृच्छ्य गतः कुण्डिनपत्तनम् । तदीयदानभोज्यादि सर्वमुर्वीभुजेऽभ्यधात् ॥ ४ ॥ तद् निशम्या-परद् भैमी मुदिता मेदिनीपतिम् । नल एव स कुब्जत्वं ययौ केनापि हेतुना ॥ ५ ॥ तद् दानं मतिः सूर्यपाका रसवती च सा । सन्ति नान्यत्र कुत्रापि पुष्पश्लोकतरं विना ॥ ६ ॥ तामालोच्य ततस्तात ! समुन्मेषय शेमुषीम् । नलो यथा स्यादेव प्रकटीभवति स्वयम् ॥ ७ ॥ सांत्वयादमाह भूपस्तां चरं संमन्य फल्गुन । आकार्यो दधिपर्णोऽयं त्वत्स्वयंवरणच्छलात् ॥ ८ ॥ गत्वा दूतो यथादिष्टं कथयिष्यति तं प्रति । आसन्ने यद् दिने भावी दवदन्त्याः स्वयंवरः ॥ ९ ॥ तत्पार्श्वे यदि कुब्जोऽयं नलः स्यादवनीधवः । तदश्वहृदयाभिज्ञस्तमानेष्यति स द्रुतम् ॥ १० ॥ इति निश्चित्य भीमेन भूभुजा प्रेषितश्चरः । सुसुमारपुरं गत्वा दधिपर्णमदोऽवदत् ॥ ११ ॥ न प्रापि नलवार्त्तापि क्वापि

तेन करिष्यति। भूयः स्वयंवरो भैमी प्रभुणा प्रेपितोऽस्मि तत् ॥ १२ ॥ किन्तु मार्गविलम्बोऽभूद् देहस्यापाटवाद् मम। प्रत्यासन्नतरं जात तल्लग्नं श्वस्तने दिने ॥ १३ ॥ तूर्णं देव! तदेतव्यमित्युक्त्वास्मिन् गते चरे। अचिन्तयद् नलश्चित्ते किमेतदिति विस्मयात् ॥ १४ ॥ वर्षिष्यति विषं चन्द्रः पूषा ध्वान्तं वमिष्यति। किमन्यमपि भर्तारं दवदन्ती करिष्यति? ॥ १५ ॥ विवोढुं प्रौढिमा कस्य मत्पत्नीं मयि जीवति?। फणामणिं समादित्सेत् को हि जाग्रति पन्नगे? ॥ १६ ॥ इति ध्यात्वा चिरं चित्ते दधिपर्णं जगाद सः। आसन्नजन्मदूरोर्वीगति-चिन्तापरायणम् ॥ १७ ॥ समर्पय हयाञ्जात्यान् रथं गाढं च कञ्चन। यथाहमश्वहृद्वेदी नये झटिति कुण्डिने ॥ १८ ॥ इति प्रीतमथाकर्ण्य दधिपर्णेन भूभुजा। उक्तोऽग्रहीच्चतुर्वाहीं रथं चाहीनमोजसा ॥ १९ ॥ अथ चामरभृद्युग्मच्छत्रभृद्भूपभासुरम्। नियुक्तवाजिनं कुब्जो रथं तूर्णमवाहयत् ॥ २० ॥ तुन्ने रथ रथेवाहैर्जवनैः पवनैरिव। अपतद् भूभृतः स्कन्धात् पटी शृङ्गादिवापगा ॥ २१ ॥ राजा तदव-दद् कुब्जं स्थिरीकुरु हयानिमान्। एतदादीयते यावद् वासो वसुमतीगतम् ॥ २२ ॥ जगाद कुब्जको राजन्! न्यपतत् यत्र तंऽशुकम्। पञ्चविंशतियोजन्याः साऽमुच्यत वसुन्धरा ॥ २३ ॥ अक्षवृक्षमथो वीक्ष्य कलां दर्शयितुं निजाम्। कियन्त्यत्र फलानीति राजा कुब्जकम-प्रवीत् ॥ २४ ॥ अजानति ततः कुब्जे फलसंख्यां धराधवः। आख्यदस्मै परिस्पष्टमष्टादशसहस्रिकाम् ॥ २५ ॥ मुष्टिघातेन दन्तीन्द्र-घातधरेण तन्नल'। अपातयदशेषाणि फलानि फलपादपात् ॥ २६ ॥ यावद् गण्यते तावत् तावन्त्येवाभवंस्ततः। अश्वहृद्विद्यया संख्याविद्यां कुब्ज. समाददे ॥ २७ ॥ कुब्जेन कुण्डिनोपान्ते रथोऽनायि निमेपतः। भीमश्चाभ्येत्य तत् तूर्णं दधिपर्णं गृहेऽनयत् ॥ २८ ॥ ऊचे मिथःकथागोष्ठ्यां दधिपर्णो विदर्भराट्। कुब्जाद् रसवतीं सूर्यपाकां कारय मन्मुदे ॥ २९ ॥ तदुक्तो दधिपर्णेन कुब्जो रसवतीं व्यधात्। इन्दुपुष्पिकरार्कांशुसंपर्कसुरभीकृता ॥ ३० ॥ लोकैः साकं रसवतीं बुभुजे भूभुजाऽथ सा। विचारा-

घर्मरश्मेरिव पद्मिनीराननम् ॥ ३१ ॥ आनाय्य तां परीक्षार्थमथैतां भीमनन्दनी । स्वादयित्वा रसवतीं कुब्जं निरचिनोद् नलम् ॥ ३२ ॥
तद् गत्वा निवेदितं प्रत्याह प्रीतिपूरिता । आस्तां कुब्जोऽपि खञ्जोऽपि निश्चितः सैष नैषधिः ॥ ३३ ॥ अभिज्ञानान्तरं तात ! पुनरेकं
तमभिन मे । नलस्पर्शेन विपुलपुलकं यद् भवेद् वपुः ॥ ३४ ॥ तद् मदङ्गमयं कुब्जः स्तोकं स्पृशतु पाणिना । इत्युक्ते भीमवचसा ताम-
गुल्या नलोऽस्पृशत् ॥ ३५ ॥ वपुः सपुलकं तस्यास्तन्नलस्पर्शतः क्षणात् । आनन्देन्दुबहिःक्षिप्ततमःपुञ्जमिवाभवत् ॥ ३६ ॥ अन्तर्भैमी
नतं निन्ये तद्वलाद्वलाप्यसौ । अनुनयत् तथा चाटुप्रेमामृतकिरा गिरा ॥ ३७ ॥ नाथ ! निह्नुतरूपोऽपि मया त्वमनुभाव्यसे । घनच्छन्नोऽपि
मायया वमजिन्येव भास्करः ॥ ३८ ॥ कियद्यापि दुःखार्त्तां दैवतो मामुपेक्षसे । अवग्रहादिवाम्भोदो भीष्मग्रीष्मद्रुतां लताम् ? ॥ ३९ ॥
नाथ ! प्रसीद सीदन्तमार्तमेनं शरण्य जनम् । संजीवय यथावस्थस्वदर्शनसुधारसैः ॥ ४० ॥ इति भैम्युपरोधेन नलस्तत्क्षण इवानलः । जज्ञे
दिव्यकरण्डाभ्यामाविष्कृतनिजाकृतिः ॥ ४१ ॥ धृतस्वरूपं तद्रूपं वीक्ष्य कं कं रसं न सा । भेजे भीमसुता धार्ष्ट्यत्रपासपातकातरा ? ॥ ४२ ॥
आमेनो वीक्ष्यमानाङ्गी नलेनेयाश्रुलेशचञ्चेः । सद्यः स्वेदोदकस्नाता सा चकम्पे चकोरदृक् ॥ ४३ ॥ अदर्शि दर्शनीयश्रीरथायातो वहिर्जनैः ।
नैषधिस्त्यक्तकुब्जत्वो राहुमुक्त इवार्यमा ॥४४॥ अपराद्धं यदज्ञानाद् मया नाथ ! क्षमस्व तत् । दधिपर्णो वदन्नेवमपतद् नलपादयोः ॥४५॥
स्वयं मैत्रीभवन् भीमो मद्रपीठे निवेश्य तम् । अभ्यषिञ्चद् नल नाथस्त्वमस्माकमिति ब्रुवन् ॥ ४६ ॥ ऋतुपर्णः प्रियायुक्त स वसन्तश्च
सार्थभृत् । सुतातु यमदायादाराद्धतो नलकान्तया ॥ ४७ ॥ वसन्तदधिपर्णर्तुपर्णभीमैः समं नल । चिक्रीड लोकपालैः स चतुर्भिरिव
वासवः ॥ ४८ ॥ धनदेवोऽपि सार्थेशः कुतोऽपि प्राप कुण्डिनम् । तस्य प्रत्युपकारं सा कारयामास भीमजा ॥ ४९ ॥

कश्चिद्देव दिवाऽन्येद्युर्देवः पश्यत्सु राजसु । भैमीं नत्वाऽवदद् देवि ! त्वत्प्रसादोऽयमीदृशः ॥ ५० ॥ संबोध्य तापसेन्द्रोऽहं पुरा प्रमा-

शितस्त्वया । विमाने केशरेऽभूवं सौधर्मे केशरः सुरः ॥ ५१ ॥ इत्युक्त्वा सप्त कल्याणकोटीर्वृष्ट्वा पुरः सुरः । विद्युद्दण्ड इवोद्दण्डो झगित्यथ तिरोदधे ॥ ५२ ॥ नलादेशेन देशेभ्यः स्वेभ्यः स्वेभ्यस्ततो नृपाः । ऋतुपर्णादयः स्वं स्वं सैन्यमानाययन्द्रुवात् ॥ ५३ ॥ नलस्तदैव दैवज्ञदत्तेऽह्नि प्रतिकोशलम् । प्रयाणं कारयामास वासवोपमवैभवः ॥ ५४ ॥ कम्पयन् सैन्यचारेण स्थावरानपि भूभृतः । कैश्चित् प्रयाणैः स प्राप कोशलोपवनावनीम् ॥ ५५ ॥ पुनर्लक्ष्मीं पणीकृत्य द्यूतार्थे कृतभाषया । नलः कूवरमाकार्य दीव्यञ्जित्वाऽग्रहीद् महीम् ॥ ५६ ॥ अथानन्दी नलो मन्दीकृतक्रोधो निजानुजम् । अपि क्रूरं व्यधाद् यौवराज्ये प्राज्यमहोत्सवात् ॥ ५७ ॥ अथ संप्रेष्य निःशेष राजकं राजकुञ्जरः । दवदन्त्याऽन्वितो राज्यं चक्रे जन्मेव केशयः ॥ ५८ ॥

जिनसेनाभिधं सूरिं निष्णातागममेरुदा । ययौ नलो नमस्कर्तुं तया दयितया सह ॥ ५९ ॥ प्रणम्य नैषधिः सूरिं निविष्टः क्षितिविष्टरे । पप्रच्छ स्वस्य देव्याश्च कारणं सुखदुःखयोः ॥६०॥ निरस्तमन्मथो वाचमथोवाच मुनीश्वरः । राजन्नष्टापदोपान्तेऽस्ति सङ्गरपुरं पुरम्॥६१॥ तत्रासीद् मम्मणो राजा तस्य वीरमती प्रिया । अन्यदा खेटके गच्छन् भूपोऽपश्यत् पुरो मुनिम् ॥ ६२ ॥ मन्वन्नशकुनं सोऽथ धारयामास तं क्रुधा तं द्वादशघटीप्रान्ते कृपयाऽमूमुचत् पुनः ॥६३॥ तदहिंसामयो धर्मः साधुनास्मै निवेदितः । राज्ञाप्यङ्गीकृतो वीरमत्या दयितया समम्॥६४॥ ताभ्यां राजसभायेन तद् व्रतो प्रतिलाभितः । अपराधं समस्येतमुक्त्वा जगाम सः ॥६५॥ सेवाप्रसाधिता वीरमतीं शासनदेवता । धर्मस्थैर्यकृते निन्येऽन्येद्युरष्टापदोपरि ॥ ६६ ॥ अकृत प्रतितीर्थेशं विंशतिं विंशतिं ततः । आचाम्लानि तथैकैकममम्लानरुचि पुण्ड्कम् ॥ ६७ ॥ तदुद्यापनकं कृत्वा प्रीता कान्ता महीपतेः । मुनीनानन्य दानेन चारणान् पारणं व्यधात् ॥ ६८ ॥ तत्तीर्थेशपदान् नत्वा राजधानीमियाय सा । चक्रे पत्या समं चार्हद्धर्मं निर्मलमानसा ॥ ६९ ॥ ततः पूर्णायुषावेतौ देवीभूय बभूवतुः । आभीरदम्पती धन्यधूसर्याख्यौ सुधार्मिकौ ॥७०॥

मरार्द्र प्राप्ति स्वयं धृत्वा ध्यानधने मुनौ। दत्त्वा च पायसं तस्मै धन्यो धर्ममुपार्जयत् ॥ ७१ ॥ दम्पती हिमवच्छैले भूत्वा तौ युग्म-
धर्मिणौ। अभूतां क्षीरडिण्डीराभिधानौ त्रिदशावथ ॥ ७२ ॥ ततश्च्युत्वा क्षीरडिण्डीरजीवोऽभूद् नैषधिर्भवान्। प्रिया ते क्षीरडिण्डीरा-
देवीजीवस्तु भीमजा ॥ ७३ ॥ यद् द्वादश घटीर्बध्वे मम्मणेन त्वया मुनिः। तत् प्रियाविरहो राज्यभ्रंशश्च द्वादशाब्दिकः ॥ ७४ ॥ यच्छ्रुत-
धारत्वं क्षीरदत्वं च मुनेः कृतम्। तथा धनेन धन्येन तेन राज्यस्य संपदः ॥ ७५ ॥ भैमी त्वद्वल्लभा वीरमतीजन्मनि यद् ददौ।
तिलकान्यर्हतो भाले तेनाऽस्याऽऽस्तिलकोऽद्भुतः ॥ ७६ ॥

श्रुत्वेत्थं नृपदम्पती स्वचरितं तौ जातजातिस्मृती कृत्वा पुष्कलपुत्रसाद् वसुमतीं तप्त्वा ततोऽन्येतयोः।
अप्ये यत्पतिर्नजः कनकवत्पाख्या दशारानुजस्त्वौ भूत्वाऽप्यगृहस्य केवलिकलां भैमी तु भेजे शिवम् ॥७७॥

॥ इति दमयन्तीललितनामनि महाकाव्ये चतुर्थः सर्गः ॥

॥ इति दमयन्ती कथा समाप्ता ॥

अस्यां चन्दनबाला तु मृगावतीकथायामुपदेक्ष्यते; मनोरमा च श्रेष्ठिसुदर्शनकथायां तत्प्रियात्वेन पूर्वं कथितैव। अथ विला-
सवतीकथा—

अस्तीह तामलिप्तीति पुरी स्वीकृता श्रिया। हसन्तीवाऽमरपुरीं या चैत्यविशदध्वजैः ॥१॥ तस्यामीशानचन्द्रः क्ष्मामण्डलाखण्डलः
रिज। यस्तांत्रानीरवीरसिजलप्लावितशात्रवः ॥२॥ शृङ्गारमञ्जरीत्यस्य प्रिया शृङ्गारमञ्जरी। भृङ्गश्रेणीव यन्मूर्ध्नि वेणीदण्डो व्यराजत
॥ ३ ॥ तस्येशानचन्द्रस्य शरच्चन्द्रसमानना। श्रीविलासवती तस्यासीद् विलासवती सुता ॥४॥ यथाकालमथामुष्यां पुरि शृङ्गारजीवि-

जितस्त्वया। विमाने केशरेऽभूवं सौधर्मे केशरः सुरः ॥ ५१ ॥ इत्युक्त्वा सप्त कल्याणकोटीर्वर्षन्पुरः सुरः। विद्युद्दण्ड इवोद्दण्डो झगित्यथ तिरोदधे ॥ ५२ ॥ नलादेशेन देशेभ्यः स्वेभ्यः स्वेभ्यस्ततो नृपाः। ऋतुपर्णादयः स्वं स्वं सैन्यमानाययञ्जवात् ॥ ५३ ॥ नलस्तैरेव दैवदत्तेऽह्नि प्रतिकोशलम्। प्रयाणं कारयामास वासवोपमवैभवः ॥ ५४ ॥ कम्पयन् सैन्यचारेण स्थावरानपि भूभृतः। कैश्चित् प्रयाणैः स प्राप कोशलोपवनावनीम् ॥ ५५ ॥ पुनर्लक्ष्मीं पणीकृत्य द्यूतार्थं दूतभाषया। नलः कूबरमाकार्य दीव्यञ्जित्वाऽग्रहीद् महीम् ॥ ५६ ॥ अथानन्दी नलो मन्दीकृतक्रोधो निजानुजम्। अपि क्रूरं व्यधाद् यौवराज्ये प्राज्यमहोत्सवात् ॥ ५७ ॥ अथ संप्रेष्य निःशेषं राजकं राजकुञ्जरः। दवदन्त्याऽन्विता राज्यं चक्रे लक्ष्म्येव केशवः ॥ ५८ ॥

जिनसेनाभिधं सूरिं विज्ञातागममेकदा। ययौ नलो नमस्कर्तुं तया दयितया सह ॥ ५९ ॥ प्रणम्य नैषधिः सूरिं निविष्टः क्षितिविष्टरे। पप्रच्छ स्वस्य देव्याश्च कारणं सुखदुःखयोः ॥६०॥ निरस्तमन्मथो वाचमथोवाच मुनीश्वरः। राजन्नष्टापदोपान्तेऽस्ति सङ्गरपुरं पुरम्॥६१॥ तत्रासीद् मम्मणो राजा तस्य वीरमती प्रिया। अन्यदा खेटके गच्छन् भूपोऽपश्यत् पुरो मुनिम् ॥ ६२ ॥ मत्वाऽपशकुनं सोऽथ धारयामास तं क्रुधा तं द्वादशघटीप्रान्ते कृपयाऽमूमुचत् पुनः ॥६३॥ तदर्हिंसामयो धर्मः साधुनास्मै निवेदितः। राज्ञाप्यङ्गीकृतो वीरमत्या दयितया समम्॥६४॥ ताभ्यां राजसभावेन तद् व्रती प्रतिलाभितः। अपराधं क्षमस्वेतमुक्त्वा जगाम सः ॥६५॥ सेवाप्रसाधिता वीरमतीं शासनदेवता। धर्मस्थैर्यकृते निन्येऽन्येद्युरष्टापदोपरि ॥ ६६ ॥ अकृत प्रतितीर्थेशं विंशतिं विंशतिं ततः। आचाम्लानि तथैकैकमम्लानरुचि पुण्ड्रकम् ॥ ६७ ॥ तदुद्यापनकं कृत्वा प्रीता कान्ता महीपतेः। मुनीनानन्य दानेन चारणान् पारणं व्यधात् ॥ ६८ ॥ तत्तीर्थेशपदान् नत्वा राजधानीमियाय सा। चक्रे पत्या समं चार्हद्धर्मे निर्मलमानसा ॥ ६९ ॥ ततः पूर्णायुषावेतौ देवीभूय बभूवतुः। आभीरदम्पती धन्यधूसर्याख्यौ सुधार्मिकौ ॥७०॥

मासार्धं मासि पूर्वं कृत्वा ध्यानपरे मुनौ। दत्वा च पायसं तस्मै धन्यो धर्ममुपार्जयत् ॥ ७१ ॥ दम्पती हिमवत्क्षेत्रे भूत्वा तौ युगम-धर्मिणौ। बभूवां क्षीरडिण्डीराभिधानौ मिथुनावथ ॥ ७२ ॥ ततश्च्युत्वा क्षीरडिण्डीरजीवोऽभूद् नैषधिर्भवान्। प्रिया ते क्षीरडिण्डीरा-देवीत्यभवत्र भीमजा ॥ ७३ ॥ यद् द्वादश घटीर्दध्ये मम्मणेन त्वया मुनिः। तद् प्रियाविरहो राज्यभ्रंशश्च द्वादशाब्दिकः ॥ ७४ ॥ यच्छत्र-पात्रं क्षीरपात्रं च मुनेः कृतम्। त्वया धनेन धन्येन तेन राज्यस्य संपदः ॥ ७५ ॥ भैमी त्वद्वल्लभा वीरमतीजन्मनि यद् ददौ। निःकामपद्दंतौ भाले तेनाऽस्यास्तिलकोऽद्भुतः ॥ ७६ ॥

श्रुत्वेत्थं नृपदम्पती स्वचरितं तौ जातजातिस्मृती हत्वा पुष्कजपुत्रसाद् वसुमतीं तप्त्वा ततोऽन्येतयोः।
जज्ञे यक्षपतिर्नलः कनकवत्याख्या कुमारानुजस्त्री भूत्वाऽप्यगृहस्थकेवलिकलां भैमी तु भेजे शिवम् ॥७७॥

॥ इति दवदन्तीललितनामनि महाकाव्ये चतुर्थः सर्गः ॥

॥ इति दवदन्ती कथा समाप्ता ॥

आर्या चन्दनबाला तु मृगावतीकथायामुपदेक्ष्यते, मनोरमा च श्रेष्ठिसुदर्शनकथायां तत्प्रियात्वेन पूर्वकथितैव। अथ विलासवतीकथा—

अस्तीह तामलिप्तीति पुरी हसीकृता श्रिया। हसन्तीवाऽमरपुरीं या चैत्यविशदध्वजैः ॥१॥ तस्यामीशानचन्द्रः क्ष्मामण्डलाखण्डलः नृप। आसीत्रासीरवीरासिजलप्लावितशात्रवः ॥२॥ शृङ्गारमञ्जरीवास्य प्रिया शृङ्गारमञ्जरी। भृङ्गश्रेणीव यन्मूर्ध्नि वेणीदण्डो व्यराजत ॥ ३ ॥ तस्यामीशानचन्द्रस्य राज्ञश्चन्द्रसमानना। श्रीविलासवती तस्यासीद् विलासवती सुता ॥४॥ यथाकालमथामुष्यां पुरि शृङ्गारजीवि-

तम्। प्रावर्तत वसन्तर्तुर्नर्तयन् कामिनां मनः॥५॥ मञ्जरीभिरनुस्यूताश्चूताः पल्लविता बभुः। तूणाः शोणाजिनमयाः पुष्पेषोरिव पूरिताः॥६॥
स्रमुराहृ घाताश्वालङ्गीकृतशिलीमुखाः। तदा मलयजामोदाः स्मरस्येव चमूचराः ॥ ७॥ किञ्जल्कादकुरचन्द्राजिमूर्त्तिभिर्विदधमान्द्रो।
पीतरक्तसितश्यामैर्ध्यानैरिव तदा स्मरः ॥ ८ ॥ प्रमाणोत्तरमातेनुः कुहूकण्ठीरवास्तदा। अनित्यतां कुरङ्गे या द्वैतं शवरसूदने ॥ ९ ॥ वस-
न्तेऽत्र जगन्नेत्रनिर्माणैकफलं विधेः। सा विलासवती वातायनस्थानमशिश्रियत् ॥ १० ॥ शुभंयुवकुलस्यान्तः सुमनोवृन्दमात्मना। वेधं वेधं
गुणेनोद्दामयन्ती सुलोचना ॥ ११ ॥ मूर्त्तं स्मरमिव स्वीयपरिवारमियं तदा। कञ्चिद् युवानमुद्यानमभियान्तमुदैक्षत ॥ १२ ॥ युग्मम् ॥
तदात्वलाविकोऽभेपा पश्यन्त्येषाऽनिमेषदृक्। अनङ्गसुन्दरीमाह सखि! कोऽयं पुमानिति ॥ १३ ॥ तयेति सादरं पृष्टा बभाषेऽनङ्गसुन्दरी।
देव्यस्ति श्वेतवी नाम पुरी देवपुरीनिभा ॥ १४ ॥ राजा तस्यां यशोवर्माऽयशोवर्मास्ति विश्रुतः। सनत्कुमार इत्यस्य सुतो विश्रुतो-
दयः ॥१५॥ नृपाज्ञातोऽन्यदा चौराः केऽप्यनीयन्त हिंसितुम्। वाह्यालीगतमेनं ते कुमारं शरणं श्रिताः ॥१६॥ मोचिताः शोचितारा ह्यप्येतेऽनेन
महात्मना। तद् निशम्य नृपेणैते गर्त्तापूरीकृताः पुन ॥ १७ ॥ तज्ज्ञात्वाऽथ कुमारोऽपि रुष्टः सह महीभुजा। रात्रौ मितपरीवारो नगर्या
निरगादयम् ॥ १८ ॥ आक्रामन् क्रमतः पृथ्वीमाजगामेह पत्तने। त्वत्तातेनातियानादिप्रतिपत्त्याऽयमर्चितः ॥ १९ ॥ देशग्रामादिकं दीयमा-
नमथापि नेच्छति। सोऽयं देवि! नृदेवाङ्गजन्माभ्येति पुरस्तव ॥ २० ॥ तयोरिति वितन्वत्योः किंवदन्तीं परस्परम्। यावद् वातायन-
स्याधः कुमारोऽथ समागमत् ॥ २१ ॥ कुमारी तावदेतस्य कण्ठे तां वकुलस्रजम्। न्यधत्तात्मभुजाश्लेषसत्यंकारामिव त्वरात् ॥ २२ ॥
क्षिप्ता केनेयमित्यूर्ध्वं यावदैक्षत विस्मितः। कुमारस्तावदद्राक्षीद् मृगाक्षीमुखपङ्कजम् ॥ २३ ॥ ततोऽसौ हर्षसोत्कर्षश्चकोर इव तर्पितः।
पपौ मुखशशिज्योत्स्नां तस्यास्तस्यापि सा पुनः ॥ २४ ॥ विधाय सुस्थितां कण्ठे भुजाभ्यामुपगृह्य च। कराभ्यामथ संगृह्याचुम्बत् तामिव

स ग्रजम् ॥ २५ ॥ जातु मा यातु निस्सृत्य प्रियोऽयं मे हृदोऽन्तरात् । स्वाङ्गे वृतिमितीवाधात् कुमारी स्फुटकण्टकैः ॥२६॥ कुमारस्त्वाक्षिकः सार्धं कुमार्या सारितव्रजा । हारयन् स्वं सुहृद्भिर्वसुभूतिना प्रेरितोऽग्रतः ॥ २७ ॥ ततः स्वं हारितमपि मतिमानप्रकाशयन् । अनङ्गनन्दनोद्यानं सवयोभिः समं ययौ ॥ २८ ॥ उत्पन्नलज्जया धृत्वा धैर्यं गत्वरमप्यसौ । तत्र चिक्रीड स ध्यायन् सनीडमिव तन्मुखम् ॥ २९ ॥ अत्रान्तरेऽनुरक्तात्मा प्रतीचीं मोक्तुमक्षमः । दिनेन प्रेरितो भानुरपि द्वीपान्तरं ययौ ॥ ३० ॥ आजगाम निजं धाम स्मरेणाग्नेयसायकैः । भ्रियमाणः कुमारोऽपि समारोपितधन्वना ॥ ३१ ॥ विसृज्य सुहृदस्तेन साध्यकृत्यं विधाय च । शयनीयमलंचक्रे चक्रेणेवाथ सैकतम् ॥३२॥ पल्यङ्कचन्द्रिकायापीन्दोर्हिरेयाहिराहतः । तस्य कामाभितप्तस्य सा निशा कथमप्यगात् ॥ ३३ ॥ विभातायां विभावर्यां प्रातःकृत्यं विधाय सः । उन्मना मदनारामे सहास्त सुहृज्जनैः ॥ ३४ ॥ माधवीमण्डपे नीत्वा ततोऽसौ वसुभूतिना । पृष्टः किं बाधते तेऽद्य मित्र ! येनासि दुर्मनाः ॥ ३५ ॥ न किञ्चिदिति तेनोक्ते होरामालोक्य कैतवात् । वसुभूतिर्जगौ ज्ञातं ज्ञानाद्दुःखकारणम् ॥ ३६ ॥ पुष्पस्रक्पाशमाधाय कण्ठे यस्य मनस्तया । हृतं नृपतिनन्दन्या मत् दुनोति मनोऽप्यहम् ॥ ३७ ॥ मा विषीद परं धीद ! करिष्यामि तथा यथा । झटित्येव पद्मरेखा चित्तचौरी करे तव ॥ ३८ ॥ इतश्च राजदुहितुः कृते सानङ्गसुन्दरी । कुमारस्य कृते सोऽथ वसुभूतिरुभावपि ॥ ३९ ॥ तावन्त्यन्तापवतारत्य मिथः संघटितौ द्रुतम् । द्वयोर्हि तत्तयोरेव संधिः स्यादयसोरिव ॥ ४० ॥ स्वस्य कामपरौ द्वेधा निकामं तावुभावपि । विलग्नौ न व्ययुत्पेतां स्वामिभक्तौ दिवानिशम् ॥ ४१ ॥

इतः सनत्कुमारोऽस्ति यावद् मृत्यौ कृतोद्यमः । मत्य स्मेरमुखस्तावद् वसुभूतिरदोऽवदत् ॥ ४२ ॥ वर्ध्यसे देव ! सिद्धं ते सतां हितसमीहितम् । यद् विलासवतीधात्रीसुताऽऽस्तेऽनङ्गसुन्दरी ॥ ४३ ॥ रुदती मिलिता साऽद्य मयोचे किमु रोदिषि ? । स्वामिनी

म्रियते साह मयोचे कथमाह सा ॥ ४४ ॥ मम रूपे सपत्नो यस्तत्कण्ठे केसरस्रजम् । न्यधादियमिति क्रोधादिव कामो निहन्ति ताम् ॥४५॥ वातायनाच्च पल्यङ्कं पल्यङ्कादपि कानने । काननाद् भवनेऽभ्येति बिभ्यती [illegible] स्मरादिव ॥ ४६ ॥ मनुते हारमङ्गारं नालं व्यालं विधुं वधम् । जलार्द्रां हुतभुग्मुद्रां स्मरतापग्रहेण सा ॥ ४७ ॥ अवादिषं ततोऽहं तां किं ते स्वामिनि ! बाधते ? । सोचे तस्य यशोवर्मसुतस्यादर्शनं सखि ! ॥ ४८ ॥ ततो मया तदाधारकृतेऽलीकमपीरितम् । यद् देवि ! भव धीरा ते मेलयिष्यामि तं द्रुतम् ॥ ४९ ॥ इति मद्वचसा जीवातुनेवोन्मीलितेक्षणा । ददौ मे रसनादाम तुष्टिदानेऽप्रवीच सा ॥ ५० ॥ इदमङ्गीकृतं साधु त्वया त्वय्युपपद्यते । सुहृदां हि सुहृत्स्वस्य कृपो विषमकर्मणि ॥ ५१ ॥ लेखः सखि ! शिखण्डी स्यादन्तरङ्गे नियोगिनि । तथापि मदवस्थाया लेखं तस्मै समर्पयेः ॥ ५२ ॥ इत्युक्त्वा स्मरलेखाय यावत्कथयते सखी । वृद्धया तावदुत्थाय न्यषेधि कुलजन्मया ॥ ५३ ॥ अथोत्पन्नमतिः सैषा समुत्तार्य ममार्पयत् । साञ्जना-भाम्बुजन्मलजिपि ताडङ्कयोर्युगम् ॥ ५४ ॥ अत्रान्तरे समायाता माता शृङ्गारमञ्जरी । उवाच वल्लकीं वत्से ! विलासवति ! सज्जय ॥ ५५ ॥ यतो वीणाविनोदार्थं त्वामादिशति ते पिता । वीणाकार्यपि साकार्यं समानीतैव संप्रति ॥ ५६ ॥ इत्याकर्ण्य वचो मातुस्त्रपया संवृतेङ्गिता । पित्रोः प्रमाणमादेश इत्याह स्वामिनी ततः ॥ ५७ ॥ इतिकर्तव्यतामूढाऽहं तु भूपभुवा तया । अविसृष्टापि निर्गत्य निजमन्दिरमागमम् ॥५८॥ अपृच्छ्यं तं कथं यामि कुमारं किमु वा पुनः । देवीं विज्ञपयिष्यामीत्यतश्चिन्तापरास्मि तत् ॥५९॥ श्रुत्वेत्यनङ्गसुन्दर्या गदितं मुदितोऽवदम् । अतः परं शुभे ! चिन्तां कर्तुं नार्हसि कामपि ॥ ६० ॥ प्रभुं तमात्मनो मित्रं गुणज्ञं गुणशालिनम् । तथा विज्ञपयिष्यामि यथा ते सिध्यति प्रियम् ॥ ६१ ॥ श्रुत्वेति सा पुनः प्राह स ते वज्रमयः प्रभुः । दृष्ट्वापि स्वामिनीभावं यस्तथा ही निरुद्यमः ॥ ६२ ॥ मयोचे नैष वज्रात्मा नैव देवो निरुद्यमः । निरवद्यं प्रियाप्राप्त्यै किन्तूपायं विमार्गति ॥ ६३ ॥ साह साहसिकानां किं साध्यमिति चिन्त्यते ? । मयोचे युक्तमा-

श्चैतन्मेऽजः कुत्र करिष्यते ? ॥ ६४ ॥ सोचेऽहं मन्दिरोद्यानं नयिष्ये स्वामिनीं निजाम् । आनयेथाः पुनस्तत्र त्वमपि स्वामिनं निजम् ॥ ६५ ॥
इत्युक्त्याऽनङ्गसुन्दरीकामलेखं [illegible] समर्प्य च । सा ययावहमप्यागामिह लेखस्त्वयं विभो ! ॥ ६६ ॥ कुमारोऽपि समादाय तस्यास्ताडङ्क-
योर्युगम् । निधाय हृदि रोमाञ्चजिपेस्तन्मयतामयात् ॥ ६७ ॥ कुमार्यनङ्गसुन्दर्यै ददौ काञ्चीमहं पुनः । वसुभूते ! ददे तुभ्यं कल्याणकटका-
पंचम ॥ ६८ ॥ इत्युक्तेति कुमारोऽस्मै प्रदाय कटकद्वयम् । ययौ तेन सहोद्यानं वसन्तेनेव मन्मथः ॥ ६९ ॥ युग्मम् ॥ सर्वर्तुमयमुद्यानमयमा-
लोकयन् क्रमात् । कदलीमण्डपान्तस्थां ससखीं तामलोकत ॥ ७० ॥ तद्दर्शनवशोत्पन्नप्रमोदरसमज्जनात् । रोमाञ्चवेपथू भेजे कुमारः
किमिहाद्भुतम् ? ॥ ७१ ॥ पजितस्नाजितस्निग्धमुग्धमन्थरतारकैः । तयापि सैव सद्भावरोचनैरक्षि लोचनैः ॥ ७२ ॥ अथाभ्युदस्थादेनं सा
न स्वेनां समभाषत । मतघु ! संभ्रमेणालं जनेऽस्मिन् दुःखदायिनि ॥७३॥ कुमारोऽनङ्गसुन्दर्या दर्शिते कनकासने । निषसाद कुमारी चानुमता
तेन सादरम् ॥७४॥ उक्तो ह्यनुरागेण तयोः सप्रेमपादपः । तदा स्वेदाम्बुभिः सिक्तोऽङ्कुरितः कण्टकाङ्कुरैः ॥७५॥ ताम्बूलैः पत्रितोऽन्यो-
न्यालापैर्मुकुलितस्ततः । स्मितैः कुसुमितो यावत्फलनत्मोऽस्य वीक्ष्यते ॥ ७६ ॥ तावद् दुर्वातवत् प्राप मित्रभूतिमहल्लकः । उपवीणयितुं
तेनोदस्थाप्यत नृपाङ्गजा ॥ ७७ ॥ विशेषकम् ॥ मनः प्रतीक्षमाणोऽत्र स्थायं स्थायमियं ययौ । दृष्टालोके वलद्ग्रीवाऽङ्कुरकाय वितन्वती
॥ ७८ ॥ हस्तविन्यस्तसर्वस्व इव शून्यमनास्ततः । तस्यां गतायामभ्यापि कुमारो विश्वभूतिना ॥ ७९ ॥ आवामपि न किं यावस्तां विनाऽत्र
स्थितेन किम् ? । देव ! देवकुले देवशून्ये क इव जागरः ? ॥ ८० ॥ इति मित्रगिरोत्थाय कुमारः स्वगृहं व्रजन् । दृष्टो नृपनितम्बिन्या-
ऽनङ्गनयाऽतिसस्पृहम् ॥ ८१ ॥ चेटीमुखात् तयाहूतो वामाक्षिस्पन्दभागपि । गत्वा दाक्षिण्यतः पुण्यविनय प्रणनाम ताम् ॥ ८२ ॥ सोद्वा-
पितवपुर्गन्धापितास्या स्खलितोक्तिता । अयाचत कुमारं सा रतं सारङ्गलोचना ॥ ८३ ॥ कुमारस्त्वाह तां त्वं मे माता मा मैवमादिश ।

द्वयोर्विरुद्धमेतद्धि लोकयोः कुजयोरपि ॥ ८४ ॥ इत्युक्ते सा सर्वैखद्यकैतवोचे तवोत्तम ! । मया परीक्षितं सत्त्वं साधु साधु विवेक्यसि ॥ ८५ ॥ इत्युदीर्य तदा धीर्यमाणयेयान्तरा क्षुधा । विसृष्टस्तां प्रणम्याशु निजं धाम जगाम सः ॥ ८६ ॥

इतश्च सागमायाता ताम्बूलस्रग्विलेपनम् । कुमारायाऽऽर्पयत् तं च बभाषेऽनङ्गसुन्दरी ॥ ८७ ॥ स्वामिनी मन्मुखेन त्वां देव ! विज्ञपयत्यदः । यद् माल्यमार्यपुत्रेद त्वत्कृते गुम्फितं मया ॥ ८८ ॥ कुमारस्तद् निशम्यैतत्करादादाय सादरम् । माल्यं मूर्ध्नि दधौ प्रीतः प्रियाशामिव देहिनीम् ॥ ८९ ॥ प्रियायामिव मूर्तेनानुरागेण निजं वपुः । विलिलेपाङ्गरागेणाप्युद्गतेनेव रोमभिः ॥ ९० ॥ प्रियानीतमिषोद्दामं रागपुष्टिकरं मुखे । सनत्कुमारस्ताम्बूलमनुकूलश्चरोऽकरोत् ॥ ९१ ॥ अनङ्गसुन्दरीमूचे विश्वमूतिर्जनान्तिकात् । कुमारविनयं पश्य माद किं न्यूनमस्ति पः ॥ ९२ ॥ अथ स्मित्वा कुमारोऽपि बभाषेऽनङ्गसुन्दरि ! । यत्कृत्यादेशकृद्देव्या निखिलोऽय जनो ननु ॥ ९३ ॥ इहैतव्यं त्वया तावद् विश्वमूतिमयोऽपि यत्। मा शङ्किष्ठास्तवैतायमतासोऽनङ्गसुन्दरि ! ॥ ९४ ॥ भवती यद्यस्त्यन्यत् कण्ठाभरणमस्ति नः । तद्भेतमादत्स्व नेना पोढुं द्वयं वयम् ॥९५॥ सहास्यमिति संभाष्य दत्त्वास्यै कण्ठभूषणम् । ततो विसर्जयामास कुमारोऽनङ्गसुन्दरीम् ॥९६॥

अथान्तरे समागत्य विनयन्धरसंश्रितः । तज्जातः कुमारस्य नत्वोपाविशदग्रतः ॥ ९७ ॥ कारयित्वैव विजनं कुमारमिदमभ्यधात् । अस्ति स्वस्तिमती नाम ग्रामस्त्वत्पितृमण्डले ॥ ९८ ॥ धीरसेनाभिधस्तत्र राजपुत्रशिरोमणिः । शूरत्यागः सरूपस्त्यागी भोगीश्वरश्च मान्यभूत् ॥ ९९ ॥ आगच्छत्स्वामादायान्यदा स स्वात्मगेहिनीम् । तस्याः पितुर्गृहस्थाने पुरं गच्छन्नयस्थले ॥ १०० ॥ आवासानग्रहीद् यावद् निकटा भ्वेतवर्ती पुरीम् । तावत् कुश्चिदप्यागात् तावत् तं सत्वरः पुरः ॥ १ ॥ युग्मम् ॥ तस्यानुपदमेवाधेराकृष्टतरवारयः । यमदूता इवागच्छन् पत्तयः पृथिवीशते ॥ २ ॥ रे रे क्व यासि फेरण्ड इव विप्रस्य गोपतेः । मण्डवत् खण्डयिष्यामः क्रुद्धा त्वामधुनापि ॥ ३ ॥ इत्यकृत

प्रुरन्नस्ते धीरसेनेन भाषिताः । कथयन्तु स्थिरीभूय किमनेन विनाशितम् ? ॥ ४ ॥ ऊचुस्ते ननु चौरोऽय वध्य', कस्त्वमितो भव । सो-
प्याहाऽस्य शरण्योऽहमेन रक्षामि सर्वथा ॥ ५ ॥ तदेवं ज्ञापितस्याथ नृपस्यादेशतस्त्वमी । यावत् प्रधनसंरम्भमारभन्तामुना समम् ॥ ६ ॥
यात्राऽऽगतस्तावद् यशोवर्मा पिता तव । तज्ज्ञात्वाऽऽह शरण्यं कः गृह्णाति मयि जीवति ? ॥ ७ ॥ युग्मम् ॥ प्रतिपिद्धमथो युद्धं राज्ञा
विजयवर्मणा । त्वत्पित्रा धीरसेनोऽपि सरस्तोऽगाज्जयस्थलम् ॥८॥ सुता च गृहिणी तस्य जात पुत्रः स चास्म्यहम् । कुमार ! तेन ते तातो
मत्तातस्योपकारक' ॥ ९ ॥ ममापि च मदम्बाया अपि चेति श्रुत मया । पितृभ्यां, तेन तेऽस्माक जीवलोकोऽपि किं बहु ? ॥१०॥ किञ्चाद्य
नृपतिः प्राणनश्यया निकेतनम् । दृष्टा च रुदती तेन सा नखोल्लिखिता हृदि ॥ ११ ॥ राज्ञा पृष्टा बलात्कारकारिणं त्वां शशास सा । ततः
क्रुद्ध' समादिक्षदिति मामधनं नृपः ॥ १२ ॥ सनत्कुमारकं पापं तमरे ! कुलपांसनम् । निगृहाण तथा शीघ्रं यथा कोऽपि न विन्दति ॥ १३ ॥
इत्यादिष्टो नृपेणाहं नि सृतोऽतीव दुर्मना' । हा किमेतदिति ध्यायस्तोरयोऽशृणव श्रुतम् ॥ १४ ॥ विलम्बमानं तत् श्रुत्वा प्राह नैमित्तिको-
ऽप माम् । श्रुतं सौभाग्यमेतत्ते विनयन्धर ! शोभनम् ॥ १५ ॥ ततो गतो गृह माता पृष्ट• कालुष्यकारणम् । तत् तथाऽकथयं तस्या रुदती
ताव्यदोऽयरत् ॥ १६ ॥ हा वत्स ! मा वधीरेनमुपकारिसुतो ह्ययम् । इत्यागतोऽहमतः परं यत् कृत्यमादिश ॥ १७ ॥ ततः सनत्कुमारोऽपि
चिन्तयामास चेतसि । अहो मायाविता स्त्रीणामहो विलसितं विधे• ॥ १८ ॥ स्वभावः कथ्यते राज्ञश्चेत् तदा सा निहन्यते । चेन्न तत् कुल-
मालिन्यं परं तद् मा परन्यथा ॥१९॥ तलारक्षोऽवदद् देव ! शाधि मां करवाणि किम् ? । कुमार प्राह मां छिन्धि जनिकवंशपांसनम् ॥२०॥
प्रभात्तरे श्रुतं मार्गे व्रजति कैश्चिदीच्यत । किं बहूक्तेन निर्दोपः सैप गङ्गाजल यथा ॥ २१ ॥ इत्याकर्ण्य तलारक्षः प्राह निर्दूषणो भवान् ।
यत्पुतोपश्रुती व्यक्तमेव त्वां शुद्धमाहतुः ॥ २२ ॥ तलुक्त्वाऽन्यप्रलापेन तत्कुमार ! निवेदय । कीदृगेतदभूद् येन नृपं विज्ञपयाम्यहम् ॥२३॥

कुमारः प्राह किं पश्चिम प्रमाणं सैव मेऽम्बिका । तेनोचे सैष दुष्टेति गत्वा शंसामि भूपतिम् ॥ २४ ॥ इत्युदित्वोत्थितो रुद्धः कुमारेणेति
जल्पता । संरम्भेणालमेतस्यां गुरुभ्यः को नु मत्सरः ? ॥२५॥ तेनोचे त्वं यशोवर्मसुतोऽसि कियदुच्यते । कोपस्तथैव ते तस्यां तत् प्रसीद
रिपुश्च माम् ॥ २६ ॥ कुमारः प्राह संरम्भं त्यज, स त्वाह मा वद । कुमारः प्राह चेन्न त्वं घातयिष्यामि तद् मता ॥ २७ ॥ निशम्येति
तलारक्षो रुदन् प्रोवाच धिङ् नृपम् । कुमारः प्राह को दोषस्तस्य, मे कर्मवैशसम् ॥२८॥ तलारक्षस्ततोऽवादीत् तदादिश करोमि किम् ? ।
कुमारोऽभिदधे तूर्णं पिधेहि नृपशासनम् ॥ २९ ॥ तेनोचे कः प्रलापोऽयमसंबद्धः पुनः पुनः । कुमार ! जगदाधार ! सुतारगुणगौरव !
॥ ३० ॥ यदि रक्षसि तां रक्ष देव ! किन्तु ममादिश । उपायं येन ते न स्यामपराधी कथञ्चन ॥ ३१ ॥ कुमारोऽचिन्तयच्चित्ते मायोऽयं मय्य-
मारिते । मारयन्नपराधी मे तद् वरं विषयान्तरम् ॥ ३२ ॥ आख्यदेतत् कुमारोऽस्मै सोऽपि हृष्टो जगाविति । स्वयंभूमिं प्रति ततो यान-
मंद्य यास्यति ॥ ३३ ॥ सविश्वभूतिधिनयंधरः सद्गुणबन्धुरः । ययौ क्षणं कुमारोऽथ वेलाकूलं पयोनिधेः ॥३४॥ ततः समुद्रदत्तस्यार्पयत्
प्रवहणेशितुः । विश्वभूतिद्वितीयं तं कुमारं विनयंधरः ॥ ३५ ॥ कुमार ! खेदितोऽसि त्वं क्षन्तव्यमिति साश्रुदृक् । संभाष्यैनं प्रणम्याथ तला-
रक्षो न्यवर्तत ॥ ३६ ॥ उदितेऽथ विधौ वार्धिवेलापयसि वल्गति । सविश्वभूतिरारोहद् यानमुर्वीशनन्दनः ॥ ३७ ॥ नावर्गलान् समुत्क्षिप्य
गृहीतांशुकमञ्जना । कर्णधारे समुत्सुक्ते नीरपूर्यत नाविकैः ॥ ३८ ॥ यानेन जाधिकेनाथ पाथःपथमतीत्य तौ । दिनैः कतिपयैरेव स्वयं-
भूमिं समीयतुः ॥ ३९ ॥ समुद्रदत्तमापृच्छ्योत्तीर्य प्रवहणात् ततः । सविश्वभूतिरविशत् कुमारः श्रीपुरं पुरम् ॥ ४० ॥ श्वेतवीतः समायातं
मित्रदत्तयतिप्रसुतम् । समनोरथदत्ताख्यं बालमित्रमिदैक्षत ॥ ४१ ॥ असंभाव्यागमः सोऽपि वीक्षितोऽनेन संभ्रमात् । विहसंश्च प्रणा-
म्यारामानेऽनीयत भक्तितः ॥ ४२ ॥ भुक्तोत्तरं ततः पृष्टः समागमनकारणम् । कुमारः प्राह यानस्मि तातरोपेण सिंहजम् ॥ ४३ ॥ तत्र

मे मातुलो राजा तं द्रष्टुमहमुत्सुकः । तत्त्वं मे सिंहलद्वीपगामि यानं निवेदये ॥ ४४ ॥ ततः कतिपयैरेव वासरैः स न्यवेदयत् । यानमेकं कुमाराय प्रस्थास्नु प्रति सिंहलम् ॥ ४५ ॥ गच्छतेऽस्मै वणिक्पुत्रः पटमेकमढौकयत् । आश्चर्यकारी देवाय गृह्यतामिति रोचयन् ॥ ४६ ॥ किमाश्चर्यं करोत्येष कुमारेणेति भाषिते । स प्राह पुरुषं कुर्याददृश्यमवगुण्ठनं ॥ ४७ ॥ कुमारः प्राह लाभोऽस्य कुतस्ते सोऽब्रवीदिति । अस्त्यासन्नमितानन्दपुरं तत्रास्ति मे सुहृत् ॥ ४८ ॥ सिद्धसेनाभिधः सिद्धविद्यस्तेनैकदा मम । भातीव मण्डजे यत्तकन्याऽभ्यर्चीकृता पुरा ॥ ४९ ॥ तयाऽभितुष्टया दृष्टिममोघीकर्तुमात्मनः । कुमार ! मम दत्तोऽयं पटो नयनमोहनः ॥ ५० ॥ ततः प्रीतः कुमारस्तमादायानुमतोऽमुना । सविश्वभूतिरगमद् वेलाकूलं पयोनिधेः ॥ ५१ ॥ प्राह सांयात्रिकं तत्रेश्वरदत्तं मनोरमः । कुमारोऽयं मम स्वामी सर्वस्वं वा किमुच्यते ? ॥ ५२ ॥ द्रष्टव्यस्तत् त्वयात्मेवेत्युक्ते सोऽभिदधे ततः । मित्र ! किं बहुना यादृक् तव तादृग् ममाप्यसौ ॥ ५३ ॥ भाजयित्वेति भूपालभवं नत्वा च सोऽगमत् । कुमारोऽथ समारोहद् यानमेतदपूर्यत ॥ ५४ ॥ अथेद् सिंहलद्वीपाभियानं यानमन्यदा । कालमेघमयः कालः क्रुधोत्तालोऽकटाक्षयत् ॥ ५५ ॥ तदा वर्षानिलोल्लोलकल्लोलकिलिकिञ्चितैः । यानं तरीयवद् व्योम्न्यारुह्याधरापतद् मुहुः ॥ ५६ ॥ कातरा व्यलपन् धीरा यानत्राणोद्यमं व्यधुः । धार्मिकाश्च तदा स्वस्वकुलदैवतमस्मरन् ॥ ५७ ॥ आकृष्य कुत्रचिद् वार्धिनगमूर्ध्नि निरङ्कुशम् । तदा दुर्दैवसंरम्भाद् यानमेतदभज्यत ॥ ५८ ॥ धीरचेताः कुमारस्तु प्राप्यैकं फलकं ततः । व्यहोरात्रं तरंस्तोयं गतोऽयं तीरमम्बुधेः ॥ ५९ ॥ ततोऽसौ पुलिने गत्वा वासांसि निरपीडयत् । तदवस्थामिवालोक्य मुञ्चन्तीवाश्रुनिर्भरम् ॥ ६० ॥ व्यमोहनपटः स्वानुभावात् तीमित एव न । यद्वा कुमारतु ख्यातचिकीर्जाड्यं किमेतु स ? ॥ ६१ ॥ कुमारस्तदभेदेन विस्मितागैरूपा दिशा । गाथा किञ्चिद् विशश्राम श्रान्तो जम्बूतजायनौ ॥ ६२ ॥ अचिन्तयच्च तत्रायमहो ! विधिविजृम्भितम् । अश्रद्धे-

यामवाप्यापि दशां यज्जीव्यते मया ॥ ६३ ॥ विश्वभूतिं विना तेन जीवितेनापि किं मम ?। यद्वा कृत विषादेन विचित्रा कर्मणां गतिः ॥ ॥ ६४ ॥ यथाऽहमुद्धृतो जीवस्तथा सोऽपि क्वचिद् भवेत। तच्चन्द्रार्काविव क्वापि जीवन्तौ संघटावहे ॥ ६५ ॥ विचिन्त्येत्यचलत् तृष्णा-क्षुधार्त्तोऽयमुदङ्मुख । अपश्यच्च नदीमेकां वनराजिविराजिताम् ॥ ६६ ॥ कृत्वा फलजलाहारं तत्र तिष्ठन्नलोकत । एकं निजस्त्रिया युक्त सारसं भ्रमसभ्रमम् ॥ ६७ ॥ स विलासवतीं स्मृत्वा चिन्तयामासिवानिति। पक्षिणोऽमी वरं येषामभीष्टविरहो नहि ॥ ६८ ॥

अत्रान्तरे निशानाथो भङ्गाद् मग्नान्यतारकम्। भास्वानपि नभोऽम्भोधिं तीर्त्वा तत्प्रान्तमीयिवान् ॥ ६९ ॥ सान्ध्यकृत्यं विधायाथ स्मृत्वा देवगुरूनयम्। शिलाशय्यामवष्टभ्याशेत वन्य इव द्विप ॥ ७० ॥ निशान्ते वन्दिभिरिव ध्वनद्भिः श्रुतिपेशलम्। वाजिभिस्त्याजितो निद्रां विचचार वने वने ॥ ७१ ॥ यावद् गिरिसरित्तीरमेक धीरो जगाम सः। नूतनां तावदद्राक्षीद् मृगाक्षीपदपद्धतिम् ॥ ७२ ॥ ततस्तद्-नुसारेण कौतुकोत्तानमानस। किञ्चिदग्रे गतोऽपश्यदेकां तापसकन्यकाम् ॥ ७३ ॥ वल्कसंवर्मितां धर्मनृपतेः सुभटीमिव। शस्त्रागारमिवोद्यात लुण्टन्तीं पुष्पधन्वन. ॥ ७४ ॥ नागकन्यामिवोद्वृत्तामुत्तीर्णाममरीमिव। लतान्तरितदेहन्तां पश्यन्नयमचिन्तयत् ॥ ७५ ॥ युग्मम् ॥ अस्या जितो मुखेनोम्रजटावनसरित्तटे। पादान्तकनमालात्तकुकूलस्तप्यते विधु ॥ ७६ ॥ मुखाङ्कखलकेऽमुष्या खेलतो. लोचनाङ्कयोः। नासावंशमिभाद् वेधा व्यधाद् दण्डमिवान्तरे ॥ ७७ ॥ लावण्यामृतकुल्यायाः स्तनावस्या मृगीदृशः। दोर्नालकरपाथोजविशकन्दाविवोज्ज्वलौ ॥ ७८ ॥ रोमलेखामिषादस्याः पीत्वा नाभिसरोरुहम्। वक्त्रराजीवपानाय भृङ्गराजीव गच्छति ॥ ७९ ॥ योषिदेतत्समानाऽऽसीद् नास्ति नच भविष्यति। इति रेखात्रय धातुरेषा धत्ते वलित्रयम् ॥ ८० ॥ यौवनस्य स्मरारोहवाजिनो वेल्लनोचिता। अस्या विभाति जघनस्थली पुलिनपुष्कली ॥ ८१ ॥ स्वर्भुव सुभ्रुवां रूपजयस्तम्भसविभ्रमौ। ऊरू सुवर्णकदलीगर्भगौरौ विभर्त्यसौ ॥ ८२ ॥ निपत्य

पादयोरनां गम्भरजापदेशात । चन्द्रार्धमर्थयन्तीव तारिकाद्यौत्यकारिकाः ॥८३॥ इयं निसर्गमधुरा वल्कलैरपि राजते । सुवर्णकेतकीपुष्पकलि-
केव बहिर्दलैः ॥८४॥ तदियं नूनमन्यूनरूपा भूपालनन्दनी । सा विलासवती यद्वा क्वासौ क्व च वनस्थितिः ? ॥ ८५ ॥ इति चिन्तयतस्तस्य
सा श्रुत्वा कुसुमोच्चयम् । यावद् बाला चचालातमतपोविपिनसंमुखी ॥ ८६ ॥ तावदेव स्मरोन्मादं गोपयित्वाऽभिसृज्य च । नमस्कृत्य च
तामूचे तपस्ते वर्धतां शुभे ! ॥ ८७ ॥ श्वेतवीयात्स्यहं तामलिप्त्या यान् प्रति सिंहजम् । अन्तराभग्नयानत्वादेकाकीह समागमम् ॥ ८८ ॥
तद् मे भगवती शंसत्विद किं जलधेस्तटम् ? । द्वीपो वा कः प्रदेशश्च कुत्राश्रमपदं तव ? ॥ ८९ ॥ ततो विलोक्य तं सापि विकुञ्चित-
विलोचना । दिग्मुखानीव पश्यन्ती क्षणं तस्थौ ससाध्वसा ॥ ९० ॥ अदत्तप्रतिवागेवा ययावपि तपोवनम् । कुमारस्तु स्थितस्तत्र चिन्तया-
मासिवानिति ॥ ९१ ॥ युवतिस्तापसी चैषैकाकिनी तत्किमेतया ? । अन्यं प्रक्ष्याम्यहं कश्चिदिति ध्यात्वाऽविशद् वनम् ॥ ९२ ॥ पृच्छाम्ये-
तामिति पुनर्व्यावृत्तोऽयमसावपि । विशेषमपरं गत्वा स्तोकं भूभागमस्थित ॥ ९३ ॥ मुक्तया करण्डके वल्कं विस्रस्तमिव पर्यधात् ।
जृम्भमाणा बभञ्जाङ्गमबध्नात् कबरीं पुनः ॥९४॥ तद्विकारमय दृष्ट्वाऽचिन्तयत् किमिदं पुनः । विरुद्धवस्तुविषयालोकेन किमु वाऽमुना ? ॥९५॥
इति ध्यायन्नुदय गतवानयं गिरिनदीं ततः । प्राणवृत्तिं व्यधात्पाकपेशलैर्मूर्च्छां फलैः ॥९६॥ अत्रान्तरे नभोवृत्तात्फल तरणिमण्डलम् । निरन्तेन
कितावाय वातेन चपलीकृतम् ॥ ९७ ॥ सान्ध्यकृत्य विधायाथ पूर्वेण विधिना ततः । अशेत शेषयामिन्यामसौ स्वप्नमलोकत ॥ ९८ ॥
जानामि काञ्चनतरोरासन्नस्यस्य मे ददौ । स्रजं सर्वेन्द्रियमनोहरा कापि वराङ्गना ॥ ९९ ॥ ऊचे च पूर्वकलसेयं स्रग् मया ते समर्प्यते ।
कुमार ! गृहाणेत्यमादां कण्ठे च तामधाम् ॥ २०० ॥ अत्रान्तरे विभातेशागमडिण्डिमचण्डिमा । सारसक्रौञ्चनिनदस्तस्य निद्रामनीनशत्
॥ १ ॥ प्रबुद्धोऽचिन्तयदयं मम स्वप्नोऽयमीदृशः । कन्यालाभाय यद्वेदमरण्य कुत एव सः ? ॥ २ ॥ अत्रान्तरे च पुस्फोर भुजा दक्षिण

दक्षिणा । सोऽपि दध्याविदं भावि ध्रुवं न श्रुतमन्यथा ॥ ३ ॥ तां विलासवतीं हित्वा नान्यां कन्यामहं भजे । स्वप्नोऽपि पूर्वस्त्रतेयं झगिति स्पष्ट एव मे ॥ ४ ॥ तापसी सापि सितांशुमुखीमनुकरोति ताम् । दैवतः सैव वा सा यत् ते तापस्याः क्व विभ्रमाः ? ॥ ५ ॥ इति चिन्तयतस्तस्य मूर्तं पुण्यमिवोदयौ । रविस्तमांसि भिन्दानो विघ्नानिव घनानपि ॥ ६ ॥ ततः कामज्वरार्तस्तामोषधीमिव तापसीम् । वीक्षमाणः कुमारोऽयं बभ्राम प्रतिकाननम् ॥ ७ ॥ माधवीश्लिष्टचूतद्रुतलेऽन्येद्युरसौ स्थितः । तामेव चिन्तयन् मुग्धामशृणोद् मर्मरध्वनिम् ॥ ८ ॥ ततो विवलितग्रीवः समायान्तीमलोकत । अरतीं तापसीमेकां तपःकृशतमामयम् ॥ ९ ॥ अथोत्थाय विनीतात्मा ननामायमियं पुनः । राजपुत्र ! चिरं जीवेत्याशशास सबाष्पदृक् ॥ १० ॥ कुमारोऽचिन्तयदियं कथं मामुपलक्षते ? । अथवा ज्ञानवानेव भवेद् मुनिजनोऽखिलः ॥ ११ ॥ उपविश्य कुमारेण मार्जितावनिमण्डले । तस्मै पुरो निषण्णायेत्यादिशद् वृद्धतापसी ॥ १२ ॥

कुमार ! श्रूयतामस्ति वैताढ्य इति पर्वतः । तत्र गन्धसमृद्धाख्ये पुरे विद्याधरेश्वरः ॥ १३ ॥ सहस्रबल इत्यासीत् तत्प्रिया तु शुभाभिधा । तयोरेकाहमभवं सुता मदनमञ्जरी ॥ १४ ॥ विलासपुरनाथेन पर्यणायिषि यौवने । अहं पवनगत्याख्यविद्याधरमहीभृता ॥ १५ ॥ अन्यदाऽऽवामगच्छाव दम्पती नन्दनं वनम् । नानाविधाभिः क्रीडाभिश्चिरं चाक्रीडतामिह ॥ १६ ॥ अत्रान्तरे मम भोगान्तराये समुपस्थिते । क्षीणे तदायुषि व्यच्यात् प्रदीप इव मे पतिः ॥ १७ ॥ ततोऽहं तमसाक्रान्ता सारसीव समन्ततः । क्रन्दन्ती च भ्रमन्ती च भूतले सहसाऽपतम् ॥ १८ ॥ उत्पतन्तीव मूर्च्छान्ते चेतिता पुनरस्मरम् । आकाशगामिनीं विद्यां तथाप्युदपतं नहि ॥ १९ ॥ अपराधमात्मीयं च स्मरन्ती यावदस्म्यहम् । द्वितीयं हृदयं तावद् देवानन्दः समाययौ ॥ २० ॥ विद्याधरोऽयं वैराग्याद् विलसत्तापसव्रतः । मामाह किमिदं वत्से ! मयोचे दैवचेष्टितम् ॥ २१ ॥ तेनोक्तं किं मयाऽप्युक्तमार्यपुत्रो व्यपद्यत । आकाशगामिनी विद्या सापि